॥ श्री ॥

होळकरराजवंशमौलिभूषणदेव्यहल्याविषयकं

# अहल्याचरितं

नाम

# महाकाव्यम्।

कै० भागवतोपाभिधबापुशास्त्रिसूनुना रामशास्त्रिणा

कविरत्नेन विरचितम्

तच्च

विद्वद्वर्यखुपरेकरोपाह्वबाळाचार्यैः

[illegible]

राजोपाध्यायोपाह्वरामचन्द्रसूनुना गोविन्दशर्मणा

[illegible]

[illegible] प्रकाशितम्

टकारोपनामकनारायणात्मजवासुदेवशर्मणा

कोल्हापूरनगरे श्री [illegible] मुद्रणालये मुद्रितम्।

प्रथमं संस्करणम्।

शकाब्दाः १८५९



राजाधिराजराजराजेश्वर श्रीमत्तांईयशवन्तरावहोळकर महाराजाः ।

# विषयानुक्रमणिका ।

# चित्रानुक्रमणिका ।



कविभूषणभागवतोपाभिधसखारामशार्म्मिणः ।

जन्मशाकः १८०८ ]                    [ अवमानशाकः १८५७

॥ श्री ॥

# काव्यकर्तृपरिचयः ।

उपेयुषामपि दिवं सन्निबन्धविधायिनाम् ।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥

—ध्वन्यालोकलोचने

श्रीमदहल्याचरितमहाकाव्यस्य कर्ता भागवतोपाख्यः श्रीसखारामः करवीर-संस्थाने भूधरदुर्गनिकटस्थवेदगङ्गासरित्तटवर्ति 'गारगोटी' नाम ग्रामं स्वजन्मना बहुकालनिवासेन चालञ्चकार । अस्य जन्म शालिवाहनशकाब्दे १८०८ तमे कार्तिककृष्णत्रयोदश्यामभूत् । अस्य पितुर्नाम श्रीमद्बापुशास्त्रिणो, मातुश्च श्रीसुन्दराबाई इति । उभावपि मातापितरौ सुशीलसदाचारसम्पन्नौ भगवद्भक्तिपरौ चास्ताम् । श्रीमद्बापुशास्त्रिणो धर्मशास्त्रनिष्णाता आसन् । विद्वत्पितृमार्गदर्शनेनैव श्रीसखारामेण कौमार एव बहवो ग्रन्था अमरकोशाष्टाध्यायीछन्दोनिघण्टुप्रभृतयः पठिता इति महत्कौतुकास्पदं सत्यम् । तथा च महाराष्ट्रकविमुकुटमणिश्रीमयूरस्य बह्वर्थमनोहरा आर्या अपि सखारामस्य पाठान्तरे बह्वय आसन् । बाल्यात्प्रभृत्येव सखारामस्य सत्काव्यप्रवृत्तिदर्शिनी प्रतिभा दृष्टा । अस्य काव्यप्रतिभाङ्कुरो जन्मजात एव । उच्यते ननूक्तिराङ्ग्लभाषायां यत् A poet is born, not made–सुकवित्वं सहजं न कृत्रिमं हठाकृष्टं वेति तज्जिरपवादम् ।

अष्टमे वर्षे कृतोपनयनसंस्कारेण सखारामेण वेदवेदाङ्गकाव्यालङ्कारादीनामभ्यासे प्रवेशः कृतः । नास्य पाठशालेयं प्राकृतं तथाङ्ग्लभाषाशिक्षणं वा किमप्यासीत् । १८२५शाकाब्दे विवाहोत्तरमेवानेन संस्कृतव्याकरणशास्त्रं कौमुदीप्रभृति पठितुमारब्धं गारगोट्यामेव पुराणिकोपाख्यपाण्डुरङ्गशास्त्रिभ्यः । अनन्तरं धारवाडे पण्डितप्रकाण्डविरूपाक्षशास्त्रिमहाशयेभ्यस्तथा च कुन्दवाडस्थगाडगीळोपाभिधपण्डितवरेभ्यो न्यायशास्त्रनिष्णातत्वमनेनाभ्यासेन सम्पादितम् । वेदान्तशास्त्रज्ञानं श्रीमत् टेम्बे स्वामीति प्रथितेभ्यो वेदान्तज्ञेभ्यो भगवद्भक्तेभ्यः सम्यगापादितम् । पश्चादवृद्धपितृनिदेशाद्गारगोट्यामेवैतेन निवासः कृतः । वर्षद्वयानन्तरं पितुर्निधनेन

सर्वकुटुम्बप्रपञ्चभरः सखारामशास्त्रिष्वेवापातितः । ततोऽचिरादेव चैतेषां कनीयान्भ्राता गोपालशर्मा भिषक्क्रियानिष्णातो दुर्दैववशात् ग्रान्थिकसन्निपातेन पञ्चत्वं गतः । अनेन दुःखाघातेनास्य कवेः प्रपञ्चभरचिन्तापि द्विगुणीकृता ।

करवारे तत्कालीनश्रीमच्छङ्कराचार्यपीठाधिष्ठितविद्वद्वरकुर्तकोटिमहाशयानां सकाशे सखारामशास्त्रिणः कञ्चित्कालमासन् । आचार्यैः सहोत्तरार्यावर्ते प्रवासानुभवलाभस्तैः सम्पादितः । १८४६ शाकाब्दे कोंकणप्रान्तप्रवासं कृत्वा तस्य वर्णनं काव्ये ग्रथितमेभिः कविप्रकाण्डैस्तन्नाद्यापि मुद्रणसंस्कारमापद्यत ।

अनन्तरं सखारामशास्त्रिणो वाई–प्राज्ञपाटशालायामध्यापकत्वे नियुक्ताः । किं तु वर्षद्वयानन्तरं तत्कार्यं त्यक्त्वा सप्ततारनगरे ( सातारा ) तैरामरणं वसतिः कृता । तत्राध्यापनपुराणवाचनकीर्तनैर्वृत्तिं सम्पाद्य काव्यलेखनैः कालः शास्त्रिवरैर्गमितः । भूयस्यभिरुचिः काव्य एवैतेषाम् । १८५२ तमे शाकसंवत्सरे श्रीकाशीयात्रां कृत्वा तत्रानेकतीर्थक्षेत्रगिरिकूटादिसुन्दरस्थलानां वर्णनात्मकाः श्लोका विविधदेवतास्तोत्राणि च भागवतशास्त्रिभिर्विरचितानि सन्ति ।

महाराष्ट्रसन्मुकुटमणिश्रीज्ञानेश्वरकृतज्ञानेश्वरीग्रन्थरत्नस्य चरमाध्यायपट्कस्य गीर्वाणश्लोकानुवादोऽनेन कविवरेण महता प्रयासेन रचितो वर्तते । अयं ज्ञानेश्वरीविभागगीर्वाणवेषोऽद्याप्यमुद्रितोऽस्ति ।

शास्त्रिमहाशयानां प्रबन्धेषु "केदारलिङ्गमानसपूजास्तोत्रम्" नामैकः स्तोत्रप्रबन्धः प्रकाशितस्तेषां तनयेन विनायकेन । एकाशीतिश्लोकग्रथितमेतत्स्तोत्रं भक्तिरसकाव्यगुणसम्पन्नतयातीव मधुरं समग्रतया पठनमर्हति । किन्तु कवेः कल्पनाशक्तेरुज्ज्वलतादिग्दर्शनाय तेष्वेकः श्लोकोऽत्रावतार्यते—

"रम्या हारास्तु कण्ठे स्फटिकमणिनिभा मालतीकुड्मलाभाः
शोभन्तां तत्र नित्यस्थितभुजगमणिस्पर्धमाना गिरीश ॥
गौरीसापत्नभावक्षुभितसुरनदीशुद्धवारिप्रवाहे
तिष्ठन्मूर्धस्थितेन्दुप्रतिनिधय इति प्रेक्षकैः शङ्क्यमानाः ॥ ४७ ॥"

तथा तस्य भक्तिभावार्द्रचित्तत्त्वद्योतको विस्तारभयादपर एक एव श्लोक उदाह्रियते—

"मार्कण्डेयमुखैर्मुनीश्वरगणैर्नित्यं कृताक्रोशना—
न्याकर्ण्य त्वरितं तु सङ्कटसमुद्धारार्थमाधावतः।
भक्तोद्धारविधिं विधातुमनसो भक्त्यैव सन्तुष्यतः
श्रान्तौ ते चरणौ शनैरहमतः संवाहयामि प्रभो ॥ ६५ ॥"

सखारामशर्मणां काव्यात्मकः संस्कृतपत्रव्यवहारोऽपि सहृदयमित्रैः सह भूयान् वर्तते। अस्मत्प्रियसुहृद्वर्य—'काव्य' उपाख्यशङ्करात्मजविश्वनाथशास्त्रिभी रसिककविभिः सह संस्कृतश्लोकमयः सहृदयाह्लादजननपत्रव्यवहारो वरीवर्ति। तथैव च प्रस्तुतपरिचय—लेखकेन सहापि। अस्मत्सम्पादितप्रकाशितवाङ्मय-श्रीखण्डाख्यग्रन्थस्य रसिकावलोकनप्रबन्धो भागवतशास्त्रिभिर्विलिखितोऽस्ति यस्मिन्नासप्ततिसङ्ख्याकाः सुन्दरश्लोका विराजन्ते। तस्य प्रबन्धस्योत्तरे मया लिखितमासीत्। यद्—

—"लब्धं मया भवतः सविस्तरं सहृदयं वाङ्मयश्रीखण्डपरीक्षणात्मकैकषष्टिश्लोकरत्नसमलङ्कृतं... हृदयसहजकुतुकेन सुचिराकाङ्क्षितमनपेक्षितविलम्बदोषनिर्मूलनायेव धृतरोपहारिपद्यबाहुल्यं विलम्बनेनापि हर्षविवर्धनं दशरथस्य रामचन्द्रजनुरिव ग्रन्थान्तर्गतविविधविषयसारोत्कर्षिण्या चूर्णिकयेव मण्डितं गद्यपद्यमयत्वेन चम्पूतोऽपि सरसतरमस्मत्कुलजातकविप्रोत्साहनकरं याथातथ्येन मदग्रजगुणविभववर्णकं काव्यकुलसम्भवश्रीविश्वनाथप्रतिभा—योग्यप्रशंसाकरं च पत्रम्।

समवलोकितो भावत्को मयि प्रेमा। दृष्टं च भवत्प्रेम वाङ्मयश्रीखण्डे। तेन निरतिशयां मुदं गतोऽस्मि। दर्शिता च भवता स्वकीया स्फुरत्प्रतिभा यथैतादृशी सुन्दरी मार्मिका सारग्राहिणी श्लोकरत्नमञ्जूषा निर्मिता लीलयैव भवता।" इति

नात्र शक्यं भागवतशास्त्रिणां तं समग्रं प्रबन्धमवतारयितुं तथापि केचिच्छ्लोका अधो लिख्यन्ते तेषां सहृदयताद्योतनाय।

"अयि कोमलवर्णकृष्णगुम्फां सरसां तां रुचिरां विलोक्य मित्र।
प्रमदाम्बुधिमग्नमानसोऽहमधिकं वर्णयितुं न चास्मि शक्तः ॥ ३९ ॥
क्वचित्क्वचिद्ध्रस्वदीर्घवर्णव्यत्यासवर्णनम्।
वर्तते परमत्यन्तं शोभतेऽब्जमृगाङ्कवत् ॥ ४० ॥

पन्तमयूरस्तवनं योग्यं पूज्यं यथा सुरेन्द्रवनम् ।
कवनं यस्य रमण्या वाण्याः क्रीडार्थमत्र किं भवनम् ॥ ४१ ॥
महाराष्ट्रभाषाङ्गणे लास्यकर्त्री प्रकारैरनेकैर्मयूरस्य वाणी ।
गुरुः स्यान्महाराष्ट्रभाषाकविभ्यः प्रसिद्धा स्वयं शिक्षणस्य प्रदाने।४२

श्रीमतामस्मिन्प्रकरणे सामान्यतः प्रथमद्वितीययोस्तथा तृतीयचतुर्थयोश्चरणयोर्यमकपद्धतिः पूर्वेषां कवीनामासीत्तमननुसृत्य भवद्भिर्द्वितीयचतुर्थचरणयोर्यमकपद्धतिस्स्वीकृता वर्तते । इयान् विशेषः । भिन्नरुचिर्हि कवेः प्रतिभा । नासीदन्यदत्र गमकम् । यतो नो लब्धं शब्दचित्रप्रतिपादकेषु शास्त्रेषु यद्विशिष्टयैव रीत्या यमकं स्थापितव्यं कविवरैरात्मनः कवनेष्विति । ४६ ”

अत्रोद्धृतोक्तप्रबन्धभागावलोकनेन दृश्यन्ते भागवतशास्त्रिणां मार्मिकता ग्रन्थाभ्यासः सहृदयता प्रतिभा च । एते पत्रलेखा अपि सम्यक् सम्पाद्य प्रकाशं नीताश्चेत्तेऽपि गीर्वाणरसिकानामानन्दकारिणो भवेयुः ।

एतेषु पत्रेषु क्वचित् स्वविकृतिवर्णनमपि श्लोकबद्धं कृत्वा मह्यं प्रेषितमास्ति भेषजसूचनार्थम् । यथा

“ औदर्यवातो जठरं प्रपीड्य चिन्तां समुद्भावयतीव नित्यम् ।
न तेन मे मित्र कदापि चेतः प्रसन्नतामेति दिवा च नक्तम् ॥
अन्नाशयस्थौदरिकी मदीया लोपं गता पाचनशक्तिरद्य ।
ततोऽधुना वेदनया च गुर्व्या निपीडितोऽहं खलु सर्वदास्मि ॥

विलोक्य सर्वमधुना दद्याद्भेषजमुत्तमम् ।
इति विज्ञाप्यते प्रेम्णा सखारामेण चाधुना ” ॥

तथा च १८५३ शाकाब्दे पौष शु० ९ म्यां लिखितं प्रकृतिवर्णनं गद्येन यथा ।

“ एतर्हि प्रकृतिविषये किञ्चिदुल्लिखामि । भालात्परस्ताच्छिखां यावन्मध्यं सन्ततं वेदना भवति । तेन च दूयतेऽन्तः । न किञ्चिदपि स्मर्यते । न चोपजायते । न प्रोत्सहते । न प्रसीदति । नोल्लसति चित्तम् । नानन्दति न च नवं विषयमाकलय्य विहरति । सदा केवलं तूष्णीभावमेवाङ्गीकुरुते आमक्लान्ता बुद्धिः । किं नामात्र विधातव्यम् । आयुर्भेषजमत्र सम्यग्वर्तते वा ? ।

'ब्राह्मीतैलं मस्तके लेपनीयम्' इत्युच्यते। एवमाकर्ण्य भ्रान्तं भवति चेतः। वैद्यास्तु विश्रान्तिमाश्रयन्तु भवन्त इत्यभिदधति। परं कथं विश्रान्तिमनुभवामि। न हि प्रपञ्चव्ययो विश्रान्तिमेति। न हि तत्र कोऽपि सङ्क्षेपः सम्भवति। तस्मादत्र विचार्य भेषजं प्रेर्यतामिति स्मारयित्वा विरम्यते।"

एतानि पत्रान्तर्वृत्तानि वदन्ति कटुतमं सत्यं यत् प्रायेण विद्वांसोऽपि बहवः कवयो दारिद्र्यपीडामनुभवन्त एव स्वानि महार्हाणि काव्यानि रचयामासुः। श्रीमद्भागवतशास्त्रिणो दारिद्र्यपीडाभाजोपि भगवद्भजनशीला विद्याव्यासङ्गपरायणा श्रीमद्भागवतज्ञानेश्वरीप्रभृतिसद्ग्रन्थेषु निविष्टबुद्धयः केवलं महता काव्यादरेणैवैतादृशीं महतीं साहित्यसेवां कर्तुं समर्था अभवन्नदीर्घवयस्यपि जीविते।

प्रपञ्चभरदारिद्र्याविश्रान्त्यादिकारणैरेतेषां प्रकृतिरशक्ता सञ्जाता। तथोदरस्थशूलश्चाकस्मादेवासह्यवेदनो भूतः। तस्य शस्त्रक्रियया निराकरणं क्रियतामिति ससतारस्थभिषग्वर्यैरादिष्टाः शास्त्रिमहाशया मिरजमिशनरुग्णालये शस्त्रक्रियोत्तरमचिरादेवाप्राप्यैव पुनः संवदेनां स्वामिहलोकयात्रां समापितवन्तः शके १८५७ वैशाखशुद्धैकादश्याम्। महतीयं खलु हानिः सखारामशर्मणां पत्नीजानकीबाईविनायकशङ्कराख्यपुत्रद्वयकनिष्ठबन्धुवासुदेवाख्यप्रभृतिभागवतकुटुम्बीयानाम्। तदधिकतरैव पुनर्वाङ्मयहानिरेतेषां रसिककविवर्याणामकालिकनिधनेन जातेत्येतदहल्याचरितरसिकवाचका निःसंशयं चिन्तयेयुरिति नम्रं मतमस्मदीयम्।

समाप्यतेऽयमस्मद्गुरुतुल्यकविपरिचायको लेखोऽस्मल्लिखितपद्यद्वयेन सखारामशास्त्रिस्तुतिश्लोकद्वयेन

अज्ञानमालिन्यविशुद्धिकारि
स्फुरत्प्रभानाशितहृत्तमिस्रम्।
मनोरजोध्वंसिलसत्परागं
वन्दे पदाब्जं गुरुदेवतायाः॥

सलीलमेतां सलिलप्रवाहां यो वीतदोषां कवितां करोति।
सदा सदाचारपराय तस्मै भूयांसि मे सन्तु नमांसि भूयः॥

श्रीखण्डेकुलोत्पन्नश्चिन्तामणिसूनू रामचन्द्रशर्मा

एम्. बी. बी. एस.।

# प्रकाशकस्य प्रस्तावः।



सुगृहीतनाम्न्याः धर्ममूर्तेर्जगद्वन्द्यायाः श्रीमदहल्यादेव्याश्चरितरत्नं तन्निर्मातॄणां भागवतोपाह्वानां सखारामशास्त्रिणां मनीषया रेशीमवाले इत्युपाख्यायाः श्रीमत्याः कै० रुक्मिणीबाईमहाभागायाः संस्मारकत्वेन प्रकाशयितव्यमिति निर्धारितचरमस्माभिः। किन्तु दैवदुर्विलसितेनान्यदेवात्र किमपि विनियोजितम्। अस्य चरितरत्नस्य प्रकाशनं तन्निर्मातॄणामस्माकं च चेतः प्रमोदयिष्यतीत्थं विचिन्तयत्स्वस्मासु हा हन्त हन्त चरितनिर्मापकास्तत्प्रणयनपरिसमाप्तिसमकालमेव निर्घृणेन कालेन स्ववशं नीताः। अतश्चरितनिर्मापकानपि स्मारकविषयत्वेनात्र सन्निवेश्यास्य ग्रन्थस्य प्रकाशनप्रसक्तिरस्मासु समापतितेत्यतितरां खिद्यतेऽस्मच्चेतः। शास्त्रिचरणैर्महतायासेन विनिर्मितोऽयं ग्रन्थो यावन्न मुद्रणाय प्रेषितस्तावत्ते लोकान्तरं समापन्नाः। मन्येऽस्मिंश्चरिते यत्किञ्चित्तत्र तत्र न्यूनातिरिक्तं स्यात्साक्षाच्चरितनायिकामेव तत्प्रष्टुं ते गताः।

सत्सु नैकविधेष्वपि चरितान्तरविषयेष्वहल्याचरितरत्नसङ्ग्रथन एव लेखकमहोदयस्य यद्बुद्धेः प्रेरणमभूत्तत्रेदमेव प्रथमं निदानम्। यत्। शके १८५२ तमे वर्षे माघे मासे काश्यादितीर्थक्षेत्रयात्रार्थमस्माभिः सह ते प्रस्थिताः। अस्मत्पत्न्या अम्बिका रेशीमवाले इत्युपाख्या कै० रुक्मिणीबाईमहोदया शास्त्रिपादाश्च वयं सर्वेऽपि त्रिस्थलीं कृत्वा प्रसङ्गवशेन भूयोऽपि वाराणसीं यदा प्रत्यायासिष्म तदा दशाश्वमेधघट्टकोपरिष्टाद्भागे वर्तमानायामहल्याविनिर्मापितायां धर्मशालायां न्यवात्स्म। तत्पूर्वं प्रयागतीर्थप्रदेष्वाहल्येयेष्वेव पथिकनिवासेषु वसतिः कृता। शोकप्रमोषकमाहल्येयं विष्णुपदमन्दिरमपि प्रत्यक्षीकृतम्। तत्र तत्राहल्यायाः सितच्छत्रा यशोविततिरप्यस्मच्छ्रुतिपथमागता। इत्यादिभिः कारणैः शास्त्रिचरणानां परमादरबुद्धिः पूर्वमेव संवृत्ताहल्यायाम्। सैव वाराणस्यामुपर्युक्तं पथिकारामस्थानं दृष्ट्वा तत्स्थानसुलभदर्शनाया देव्या भागीरथ्या जलपावित्र्यमिवाहल्यादेव्याश्चरितपावित्र्यं सुनिपुणं मनसिकृत्य चातिशयतां समासाद्य भक्त्यात्मना परिणता। निवेदिता च सा तत्स्थानाधिकृतान्मणूरकरोपाह्वान्प्रति। कथाप्रसङ्गे-

ष्वितस्ततः प्रचलितेषु सत्सु सौपर्वाणवाण्यां साध्व्या अहल्यायाश्चरिताभावः सम्भाषणविषयोऽभूत् । तदानीं तत्रभवान्मणूरकरोऽस्मुमुचत्किल शास्त्रिवरेण्यान् । यद्भवद्भिस्तद्वाण्यां तच्चरितं प्रणेयमिति । तदात्व एव तैरपि तत्संसूचना स्वीकृतानुष्ठातुं सङ्कल्पिता च । शास्त्रिमहाशयानां विबुधवाणीप्रभुत्वमहल्याविषयिणीं भक्तिं च दृष्ट्वा तच्चरितप्रणयनसङ्कल्पोऽस्माभिरपि झटिति सोत्साहमन्वमोदि । एवं चैतादृशप्रसङ्ग एवाहल्याचरितग्रन्थनबीजम् ।

तदनु मथुरा–वृन्दावन–हरिद्वार – जयपूर – सिद्धपूर – अजमीर–पुष्कर–नाथद्वारेत्यादितीर्थक्षेत्राणि यात्रामिषेण यदा प्रास्थिष्महि वयं तदापि कै० रुक्मिणीबाई रेशीमवाले महाभागास्माभिः साकमागतवती । सुगृहीतनाम्न्यास्तस्या भर्ता कै० कृष्णरावमहाशयः सोयं श्रीलस्तदानीमिन्दूरसंस्थाने ' रेव्हिन्यु मिनिस्टरा ' ख्याधिकारपदान्नातिचिरपूर्वं निवृत्तवान् किल । अत एवाहल्यानिर्मापिततत्तत्पथिकनिवासभवनेषु तत्र तत्रत्या व्यवस्थापकमहाभागाः सञ्जानते स्म रुक्मिण्यार्यां सादरम् । अतः कारणादाहल्येयेषु तत्तत्पथिकावसथेषु यात्राप्रसङ्गेनास्माभिःसह निवासं कुर्वतां शास्त्रिपादानां मनसि सुगूढमवस्थितमहल्याचरितप्रणयनबीजमहल्यामूर्तितन्निर्मापितमन्दिरादिदर्शनजलेनाङ्कुरभावं समापन्नम् ।

पश्चात्सर्वां यात्रां परिसमाप्य चरितलेखनं निमित्तीकृत्य शास्त्रिचरणा अस्माभिः साकमिन्दूरनगरीं प्रास्थिषत । तत्र तदानींतनानहल्योत्सवमण्डलाध्यक्षान् डेप्युटी ' प्राइम मिनिस्टर ' पदं विभ्राजमानान्सरदार माधवराव किबे महाशयांस्तथा ' होममिनिस्टर ' पदाधिकारिण उत्सवमण्डलप्रमुखसदस्यान्सरदार चाकूणमहोदयांश्च सन्दर्श्य ताभ्यां शास्त्रिपादानां तत्तादृशः सङ्कल्पोऽस्माभिर्न्यवेदि । व्यतारि च ताभ्यामपि तत्कार्येऽनुमतिः सविशेषम् । चाकूणमहाभागास्तु तदानीं काश्चन सूचनाः संसूच्योत्सवमण्डलेन प्रकाशितपूर्वमाहल्येयं प्रबन्धद्वयं तत्कार्यप्रोत्साहनत्वेनास्मभ्यं समर्पितवन्तः । व्याहृतवन्तश्च ते च किबेमहाशयाश्च सखेदमेतां वाणीम् । यदस्मिन्कार्ये साहाय्यार्थमर्थं तावत्पर्याप्तं वितरीतुं नालम्भविष्णु मण्डलमिदमिति । तथापि नैतयोर्वचः शास्त्रिणामुत्साहमभिभङ्क्तुमशकत्प्रत्युत द्वैगुण्येनैव तं वृद्धिं नीतवत् खलु । ततः सविशेषाणि समुत्तेजकानि च कानिचिदास्माकीनानि वचांसि समाकलय्य द्रढीयान्संवृत्तश्चरितलेखनविचाराङ्कुरः शास्त्रिपादानाम् ।

तत्पश्चाच्छास्त्रिवरैश्चरितलेखनसाधनसामग्री सङ्ग्रहीतुं प्रयतितम्। (१) के. रा. ब. दत्तात्रय बलवन्त पारसनीसमहोदयविरचितोऽहल्याप्रबन्धः (२) इन्दूर-नगर्यां श्रीमल्लारिविजयनामके साप्ताहिके पत्रे प्रकाशितमहल्याविषयकं किञ्चिद्वृत्तम्। इत्यादिसामग्रीं शास्त्रिमहाशया उपलब्धवन्तः। (१) पुरुषोत्तमकृतमहल्या-चरितम् (२) रा. ब. चिंतामण विनायक वैद्य महोदयविरचितोऽहल्याविषयकः प्रबन्धः (३) एल्फिन्स्टन् विरचितो मालवानामितिहासः (४) अहल्यो-त्सवमण्डलप्रकाशितचराः कियन्तश्चित्प्रबन्धाः। इत्यादिसामग्रीमुपलभ्य तत्कार्य-निर्वर्तनाय शास्त्रिभ्यो वितीर्णवन्तो वयम्। कार्यप्रसङ्गमिषेण सातारापुरमाग-तानां श्री. गोविन्द सखाराम सरदेसाई महाशयानां भारतीयेतिहासकोविदानामियती सामग्री चरित्रलेखनकार्ये पर्याप्तेत्याशयः शास्त्रिभिरधिगतः। तदनु चरितरचना-विषयिकां चर्चामस्माभिःसह कृत्वा शास्त्रिभिश्चरितलेखनं समारब्धम्।

पूर्वोक्ताद्बीजाङ्कुरात्प्रारब्धसमभिहितसाधनसामग्र्या कोऽप्यपूर्वोऽहल्याचरित-तरुः शास्त्रिमहाशयैर्निरमीयत। वर्तत एव स वाचकानां चक्षुष्पथे। पुरा किल श्रीशिवाजीमहाराजजन्मनः प्रागियमार्यभूमिरासेतुहिमाचलं यवनैः समाक्रान्ता स्वधर्माचरणविघ्नाकुला सती दुःखवनभुवनकल्पैवाभूदार्याणाम्। सैव पुनस्तेन प्रौढप्रतापनिधिनेशांशावतारेण भूपतिना स्वाराज्यं समवस्थाप्य स्वधर्मेऽनिर्बन्धं स्वातन्त्र्यं प्रापय्य च महाराष्ट्रीयाणां यावतां तदन्येषां चानन्दवनभुवनत्वेन परि-वर्तितेति श्रीसमर्थरामदासानामेव वाणी लोके सुविख्याता। साध्व्याहल्ययापि श्रीशिवाजीमहाराजप्रवर्तितपूर्वं महाराष्ट्रधर्मवर्धनप्रसारादिकार्यजातं युद्धं विनापि विविधया विधया विस्तृत्य समेधितम्। प्रजैकहितदक्षतया प्रत्युत्पन्न-धिषणतया च स्वराजसूत्रं चालयित्वा तत्र तत्र तीर्थक्षेत्रादिष्वखिलभारतीयार्थं वापीकूपतडागारामपथिकनिवासस्थानदेवतायतनघट्टरथ्याप्रभृति परःसहस्रं निर्माप्य हिन्दुमात्राणां स्वधर्माचरणसौकर्यं विधायेयमार्यभूमिः सकलार्यजनानां यावतामानन्दभुवनत्वेन विपरिणमिता। कविना परमानन्देन शिवभारतं प्रणीतं तर्हि कविना सखारामशास्त्रिणाहल्याभारतं विरचितम्। ईदृग्विधायाश्चरितनायिका-याश्चरितपावनसरिता शास्त्रिमहाशयानां चरितलेखकानां मधुरवाङ्निर्झरी चेत्युभयोः सङ्गमो गङ्गासरस्वत्योरिवाद्भुतरम्य एव प्रतिभाति। एतद्द्वयमपि रसिकानां श्रोत्रपुटमापूरयति चेतःपटलं प्रसान्द्रमत्याह्लादयति च। इतिहासकाव्ययोर्मधुर-मीलनसमुत्थः कोऽप्यपूर्वरस उच्छ्रयोत्सिच्य परिपतति रसिकानां सुहृदयपात्रे

आसेचनकम्। लोकोत्तरोऽयं चरित्रद्रुमः। अस्मिन्शृङ्गारादिशान्तान्तानां तत्तद्रसानां नितान्तपरिपोषसौष्ठवं विविधतरशब्दार्थालङ्कारकुसुमसौगन्धवैचित्र्यं नैकविधवृत्त-किसलयानां सौन्दर्यमोजःप्रसादमाधुर्यादिगुणफलानां माधुर्यमित्याद्येतत्तदन्यच्च काव्यगुणजातं पिण्डीभूतम्। अपि चायं काव्यतरुः सप्तदशपर्वसङ्घट्टितः प्रति-पर्वरसोदयः। पुराणमहाकाव्यतुल्यतामेष खल्वारोहति। नूनं कालमहिम्नोच्छिन्नः संस्कृतमहाकाव्यपरम्परातन्तुः शास्त्रिमहाशयैरनेन काव्येन पुनस्सूत्रितएवेति वयं मन्यामहे। अनेन किल पुनस्सूत्रणेन प्राच्यसंस्कृतिपरम्परांशतस्तर्हि परिरक्षिता भवति। महत्कार्यमेतत्खलुशास्त्रिमहाशयानाम्।

यावान्काव्यभागो यथायथा रचितस्तथातथाऽस्मदन्तिकमुपेत्य तद्वाचयित्वा तत्प्रसङ्गेण शब्दतोऽर्थतश्च श्लिष्टश्लिष्टानि तत्तत्काव्यमर्माणि शास्त्रिमहाशयाः स्वयमेव समुद्घाटयन्ति विशदयन्ति स्म च। तदा स्वयमिवास्मानप्यमन्दमानन्दिता-न्दृष्ट्वा द्विगुणितानन्दा भवन्ति स्म। तत्समये काव्यगुणप्रोत्कर्षपराणि पदवाक्य-रचनान्तराणि यानि तेषामस्माकं च मतिमारूढानि तान्यत्र सन्निवेशितानि। तथैव करवीरपीठाधिष्ठितश्रीमच्छंकराचार्य (पित्रे) स्वामिवरेण्यैरत्रभवद्भिः पं० बाळाचार्य खुपेरकर शास्त्रिमुकुटैरप्येतदालोचितं विहितादरञ्च। दर्शितं चेदं काव्यमत्रत्य डेप्युटीपदवीविद्योतमानविद्याधिकारिभ्योऽधीतसाहित्यशास्त्रेभ्यो *'रेगे' महाभागेभ्यो व्यवहारानजीवि (वकील) भ्यो विद्वद्भ्यो गोसावी

* एतेषां प्रस्तुतकाव्यविषयक एवमभिप्रायः—

"श्रीशान्तादुर्गाविजयतेतराम्।"

"सप्ततारानगरस्थानां काव्यशास्त्रपारङ्गतानां श्रीमतां सखारामशास्त्रिभागवतानां कृति-रहल्याचरितं नाम काव्यं मयान्वालोचि। पुण्यशीलाया राज्ञ्याः साध्व्या अहल्यायाश्चरित-मादितः परममङ्गलम्। तत्कस्य परितोषाय न कल्पेत। इदं च पुनः काव्यमयम्। उत्प्रेक्षाश्लेष-दृष्टान्तार्थान्तरन्यासादिभिर्मनोहरैरलङ्कारैः स्थाने स्थाने मण्डितम्। कतिपयानि वचांसि सूक्ता-त्मकान्यत एव सङ्ग्रहवाक्यतुलामधिरोहन्ति। अहल्याविलापमुक्तासतीगमनादयः कथाप्रसङ्गा न केवलं सहृदयानां किन्तु परुषान्तःकरणानामपि चेतांस्याद्रींकुर्वन्त्यश्रुप्रमोकम्। नायिकाया अहल्यायाः स्वभावपरिपोषस्तत्कथाप्रसङ्गैरुत्कटत्वेन प्रसाध्यते। ऐतिहासिकसत्यत्वाऽविरो-धेनापि न कुत्रचित्काव्यहानिः। काव्यं व्यवहारविदे शिवेतरक्षतय इति साहित्याचार्यस्य मम्मटस्य काव्यप्रयोजनव्याख्यानं परं सार्थकत्वं गतमत्र। यशसेऽर्थकृत इति काव्यस्य पूर्वोक्तप्रयो-जनद्वयमपि महतांशेन सफलीभविष्यत्येवेत्याशास्महे।"

४।१२।३४ } रेगे कुलोत्पन्नलक्ष्मणार्यतनूजो गजाननशर्मा
सप्ततारापुरम् } सप्तताराप्रान्तप्रमुखशिक्षणाधिकारी।





अहल्याचरित्रप्रकाशनस्मारकविषयीभूता रुक्मिण्यार्या तत्पतिः कृष्णराव गोविन्द रेशीमवाले च।

महोदयेभ्यश्च । एतैः सर्वैः खलु संसूचिताः काव्यगुणसमेधका पदवाक्यादिविशेषास्तेऽपि लेखकेनात्र सप्रमोदं संनिवेशिताः । निर्गतप्राच्यसाहित्यादिशास्त्रपीयूषैः पण्डितवरश्रीखुपेरकरशास्त्रिभिः कृता काव्यमर्मविस्पष्टकारिणी टिप्पणीचात्र समुद्भासते । विद्वन्मणिमुकुटालङ्कारैर्मरगूडकरोपाह्वैर्लक्ष्मणशास्त्रिभिर्विद्वत्तागाम्भीर्यादिलक्षणसम्पन्नोपोद्घातलेखनेनायं ग्रन्थः समलङ्कृतः ।

काव्यलेखकैरेतत्काव्यरचनायाः प्राक् तत्समकालमेव वा नैकविधाः संस्कृतप्रबन्धाः प्रणीताः । तथा च । ( १ ) आह्लादशाध्यायादष्टादश यावत् संस्कृतमयीभिरनुष्टुब्भिर्ज्ञानेश्वरीपरिवर्तनम् ( २ ) ज्ञानेश्वरसंस्कृतभाषामयं चरितम् (३) केदारलिङ्गमानसपूजा प्राकृतभाषान्तरसहिता ( ४ ) देवतास्तोत्राणि ( ५ ) बकुलबिल्वसंवादः ( ६ ) गोत्रप्रवरनिर्णय इत्येवमादयः । एते सर्वे गुणविशिष्टाः खलु. किन्तु तत्सर्वापेक्षया प्रस्तुतं चरितं लेखकमहाशयानां महत्तमा कृतिः । शास्त्रिण एतच्चरितरचनाकाले जाठरव्याधिकवलीकृतस्वान्ता अपि ग्रन्थप्रणयनव्यसनस्वाभाव्याद्व्याधिं नैव मीमांसितवन्तः किन्तु चरितविरचनामेव । तत उपेक्ष्यमाणे नातएव वर्धमानेन रोगेण बत कालवशं नीतास्ते शास्त्रिणः । मेधातिथिकृता मनुस्मृतिटीका महाराष्ट्रभाषया परिवर्तितव्येति तेषां महत्स्वप्नमेवावतिष्ठते तेषां निधनात् । हन्त अति तीव्रप्रसरोऽयं दैवदुर्विलासः । एतेषां तिरोभानं नाम महाराष्ट्रविद्वत्समाजभूषणमणेरेव तिरोधानमित्येतदतिरोहितं विदुषाम् ।

एते च पण्डितवराः काव्य-व्याकरण-ज्योतिष-धर्मशास्त्रेषु सम्यक्कृतपरिश्रमाः । धीमतां तेषां काव्यशास्त्रविनोदेनैव कालो व्यतीतः। विनोदनशीलास्ते सदैव सम्भाषणावसरे श्लेषसंश्लिष्टकोटिप्रतिकोटिभिर्हास्यरसमुद्भाव्य जनानां मनांसि प्रमोदशिखरमारोपयन्ति स्म । विद्वत्ता प्रतिभा सुजनता च एतत्त्रितयमेतेषु त्रिवर्णीसङ्गम इव सम्मिलितमासीत् । निसर्गभिन्नास्पदं श्रीश्च सरस्वती च द्वयं नैवात्रैकसंस्थम्, किन्तु सन्तुष्टचित्तत्वमेव श्रीरिति मन्तव्ये सति तद्द्वयमत्रैकसंस्थमेवेत्यलं विस्तरेण। तेषां चरितस्य सङ्क्षेपतोऽस्मिन्ग्रन्थेऽन्यत्र लिखितत्वात् ।

यस्याः स्मारकत्वेनायं ग्रन्थः प्राकाश्यं नीतस्तद्विषये किञ्चिद्वक्तव्यम् । **रुक्मिणीबाईमहाभागायाः प्रसिद्धतममुपनाम ‘रेशीमवाले’ इति । कुलमेतस्या नामान्तरेणापि प्रथितं ‘निघोजकर’ इति । यतोऽहमदनगरमण्डले ( जिल्हा ) निघोजनामकं स्वमूलग्रामं तत्कुलीना अधिवसन्ति स्म । देव्यामहल्यायां राज्यं**

प्रधानस्थामेतत्कुलीनश्चिमणाजीनामा पुरुषधौरेयो वृत्त्यर्थं तौ राज्ञीं महेश्वरनगर्यां समाश्रिश्रिये । तं राज्ञी कौशेयो ( रेशीम ) त्पादनकार्याध्यक्षपदे न्ययुङ्क्त किल। तत एव स तद्वंशीयाश्च रेशीमवालेपदेन सम्बोधिताः । चिमणाजीमहाभागस्य पुत्रः सखारामः पौत्रो मार्तण्ड एतावुभावपि स्ववृत्तिसाधके कृषिव्यापारपथे स्थितवन्तौ होळकरराजानामाश्रये । मार्तण्डस्य त्रयः पुत्रा रामचन्द्रः सखारामः गोविन्दश्चेति। तत्राद्य इन्दूरसंस्थानाधिपतिं सेवमान उत्कर्षादुत्कर्षमवाप्य राज्यकार्यधुरां धृतवान् । तत्स्थानापन्नेन तेन संस्थानस्य महती सेवा कृता । यत् । १८५७ तमे खिस्ताब्दे राज्यान्दोलनवेलायां क्रान्तिकारकेभ्यः सुसंरक्षितं खलु संस्थानं तेन महतायासेन । ततस्तुकोजीमहाराजेन प्रधानपदे स नियुक्तः । तद्भ्राता च सखारामस्तत्र सेनापतिपदमधिष्ठितो 'जनरल' इति विश्रुतश्च । द्वितीयभ्रातुर्गोविन्दस्य तावत्कृष्णो गोपालः केशवश्चेति त्रयः पुत्राः । यस्याः स्मारकतयैतद्ग्रन्थः प्रकाशितस्तस्या रुक्मिण्यार्यायाः किल भर्ता तत्र भवान् कृष्णरावः। येन स्वाधिकारान्मन्दमन्दं सञ्जातोत्कर्षातिशयेन 'रेव्हिन्यु मिनिस्टर' पदं समारूढम् । तस्मात्सन्निवृत्त्येन्दूर नगरसभापतिपदमवाप्तवान्सः । पश्चात् १८५४ शकाब्दे कालवशं गतवान् । तस्य भ्राता गोपालरावस्तु 'बॅरिस्टर' पदव्या विभ्राजते । पूर्वोक्तरामचन्द्रस्य गृहीतपुत्रः सः । द्वितीयभ्राता केशवरावः कृष्णरावस्य 'रेव्हिन्यु मिनिस्टर' पदनिवृत्युत्तरकालं तदेव स्थानमवाप्य ततो निवृत्ताधिकारो भूत्वाऽस्मिन्वर्षे वैशाखमासे परलोकं गतः । तत्रभवत्या रुक्मिण्यार्याया माता नाम्ना 'सीता' पिता च 'भोगेश भीमाजी कुलकर्णी' इति । 'रायचूर' समीपवर्तिन्योः 'बेविनहाळपन्नापुरे' इति द्वयोर्ग्रामयोः 'कुलकर्णी' वृत्तिं स भुङ्क्ते स्म तथाप्यहमदनगरमण्डले ब्रिटिशराज्यसेवायामुत्कर्षं लब्ध्वा 'मामलतदार' पदमधिकृतवान् । सीता शकवर्ष १८४१ तमे भोगेशश्च १८४३ तमे पञ्चत्वमापतुः। रुक्मिण्यार्या च १८५५ शाके निधनमाप । तया निजभर्तुः कृष्णरावमहोदयस्य स्मारकत्वेनैषा स्वदेवरस्य केशवमहोदयस्य विश्वस्तत्वेन योजना कृता। तथा च । षोडशशतप्रमितरूपकाणां निधिं निर्माय तस्य कुसीदस्य विनियोगः पारितोषिकद्वयप्रदाने कर्तव्य इति नियमः कृतः । एकं पारितोषिकं होळकरीयाङ्ग्लमहाविद्यालये ( कॉलेज ) बी. ए. परीक्षायां महाराष्ट्रभाषाविषये प्रथमश्रेण्यामुत्तीर्णाय छात्राय प्रदेयम् । द्वितीयमिन्दूरसंस्कृतमहाविद्यालये वेदान्त ( अद्वैत ) परीक्षायां प्रथमश्रेण्यामुत्तीर्णाय छात्राय देयम । रुक्मिण्यार्याया निधनोत्तरं तस्यास्सद्भर्तुरैषा स्मारकरूपा योजना

तत्कनीयस्या भगिन्या कृता। तथा हि। इन्दूरनगरीयसंस्कृतमहाविद्यालय-वर्णाश्रम-सङ्घ-श्रीगुरुवाचनालयस्त्रीशालेति संस्थात्रयाय यथाक्रमं वेदान्तपराणि संस्कृत-पुस्तकानि-धर्मशास्त्रपराणि संस्कृतपुस्तकानि-धर्मनीतिपराणि महाराष्ट्रपुस्तकानि स्मारकविषययोः पतिपत्न्योश्छायाचित्रयुक्तकपाटसहितानि वितीर्णानि। एतत्स्मारक-वर्णनमायसाक्षरैरायसपट्टिकायां मुद्रयित्वा सा पट्टिकापि संस्कृतमहाविद्यालयाय वितीर्णा। रुक्मिण्यार्यायास्तद्भर्तुश्च स्मारकार्थं चास्य ग्रन्थस्य प्रकाशनम्।

श्रीदेव्यहल्यादत्ताश्रयकुलोद्भवा रुक्मिण्यार्याहल्याचरितस्य सखारामशास्त्रिणश्च गेयगायकसम्बन्धं घटयितुमपरिनिर्दिष्टप्रकारेण निमित्तीभूतातएवास्य ग्रन्थस्य तत्स्मारकत्वेन प्रकाशनमित्येतत्समञ्जसमेव। पतिनिष्ठाया धर्मपरायणायाश्च रुक्मिण्यार्यायाः साध्व्यामहल्यायां तादृशगुणनिधानात्स्वकुलीनेभ्य आश्रयप्रदानाच्च द्रढीयसी भक्तिरासीत्। अस्मिंश्चरितग्रन्थेऽहल्याचरणसान्निध्यं छायाचित्ररूपेण सदैव प्राप्तवती परलोके सात्मानं धन्यं मन्येत।

अस्मिन्ग्रन्थे मुद्रितेषु छायाचित्रेषु श्रीदेव्यहल्यायाः श्रीमल्हारराव होळ-करस्य महेश्वरवर्तिदेव्यहल्यासमाधिछत्रकस्य चेति चित्राणि सरदारश्रीमाधवराव-किबेमहाशयानां प्रयत्नेनेन्दूरसंस्थानमुद्रणाधिकारिहरिश्चन्द्रमहाशयेभ्यः समधि-गतानि। अनेनोपकृता वयं महाशयाभ्याम्।

अहल्यायाः सतीगमनात्परावर्तनं, मुक्तायाः सतीगमनाय प्रवृत्तिं, स्त्रीणां युद्धाय सन्नहनमहल्यायाः शिवपूजाममत्वमित्यादिप्रसङ्गानां शब्दचित्राणि कवि-वरैर्वाचकानां पुरतो निहितान्येव। एतत्प्रसङ्गानामाकृतिचित्राण्यपि पुनरस्मिन्ग्रन्थे सन्निवेशयितव्यानीति कविवराणां सङ्कल्पं सम्पादयितुं नापारयामेति सखेदा वयम्।

मुद्रणदोषनिवारणाय यतमानामप्यस्माकं केचिद्दोषा ग्रन्थेऽस्मिन्प्रविष्टा एव। तान्क्षन्तुं वाचकानां क्षमाशीलतैव क्षमा। दोषशोधनार्थं शुद्धिपत्रं ग्रन्थान्ते सन्निवेशितं तदुपयोक्तव्यं सुधीभिरिति प्रार्थ्यते।

निवृत्तराज्याधिकारा राजेश्वरा उदारचरिताः श्रीतुकोजीराव होळकर-महाराजास्तत्पत्न्योऽखण्डसौभाग्यसम्पन्नाः महाराज्ञ्यः सम्प्रतिसिंहासनाधिष्ठित-राजाधिराजाः सकलगुणसम्पन्ना यशवन्तरावहोळकरमहाराजास्तत्पत्न्यखण्ड-सौभाग्यसम्पन्ना महाराज्ञी चैतेषां मानसे तत्पूर्वजायाः परमपूज्याया जगन्मान्याया-एतदतिपवित्रं चरितं विलसततराम्।

श्रीदेव्यहल्याचरितात्मगङ्गा ।
विनिःसृता भागवतोत्तमाङ्गात् ॥
सुश्लिष्टशब्दार्थलसत्तरङ्गा ।
पुनातु नो मङ्गलमातनोतु ॥

इति सम्प्रार्थ्य विरमयतीमं प्रदीर्घतरं प्रस्तावं—

गुरुवारवीथ्यां, समनागपुरे,
गणेशचतुर्थ्यां १८५१ तमे वत्सरे

प्रकाशकः
गोविन्द रामचन्द्र राजोपाध्ये पण्डितरावः ।

# उपोद्घातः ।



श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीलक्ष्मीवेङ्कटेशाभ्यां नमः ।

इह खलु ब्रह्मादिस्थावरान्ताः प्राणिनः सुखार्थमेव प्रयतन्ते इत्यपरोक्षं प्रेक्षावताम् । तदुक्तं सङ्क्षेपशारीरके—

इह जगति समस्त एव जन्तुर्निरतिशयं सुखमुत्तमं ममास्तु ।
उपरमतु तथोपघातरूपं विषयजदुःखमिति स्पृहां करोति ॥

वाग्भटश्चः—सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः । इति

परं प्रवृत्तेष्वपि निखिलेषु प्राणिषु कैर्नाम स्वस्वमनोरथानुरूपफलं सुखमवाप्यते? इति प्रश्ने न केनापीत्येवोत्तरं लभ्येत कस्यापि । कारणं चात्र सर्वेषां प्रयत्नस्य लौकिकत्वमेवेत्यत्र न विप्रतिपत्तिः कस्यापि । लौकिकेषु हि कृषिवाणिज्यसेवादिषु प्रयत्नेष्वनुष्ठितेषु लब्धेष्वपि तत्तेषु फलेषु पुनस्तदपेक्षया अधिकं फलमुद्दिश्य तदधिकं कर्मानुतिष्ठन्ति प्राणिनः । अनवस्था चैवं प्रसज्यते । तदुक्तं भर्तृहरिणा :— " निःस्वो वष्टि शतं " इत्यारभ्य " आशावधिं को गतः " इति । एवं च सङ्क्षेपशारीरकोक्तविधया निरतिशयमुत्तमं सुखं न केनापि लभ्यते इति सत्यं सिद्धम् । तथा चालौकिकोपायसाध्यमेव सुखं परममन्तोषजनकमित्यर्थतः प्राप्तम् । उपायानामलौकिकत्वं तु कार्यकारणभावस्यादृष्टत्वम् ।

तादृशश्चोपायो धर्म एव । अत एवोक्तं वाग्भटेन पूर्वोदाहृतपूर्वार्धभूतवचनस्य उत्तरार्धत्वेन

' सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ' इति ।

स च धर्मो नानाविधं ऐहिकं पारत्रिकं च सुखं सूते । तथाहि, यागादिना दातृत्वविद्वत्त्वादिना प्रख्यातकीर्तित्वादिकं, प्रतिग्रहादिना धनाधिगमादिकं च ऐहिकं सुखं प्राप्यतेऽनुष्ठातृभिः । स्वर्गादि च पारत्रिकम् । पूर्तादिकर्मभ्यः कीर्त्यादि परोपकारादि च ऐहिकं, तत्तत्कर्मविहितं पारत्रिकं च लभ्यते । तत्र एतावान् विशेषः, यागादीनि कर्माणि स्वयं क्षणध्वंसीनि । अपूर्वद्वारा तज्जन्यं फलं

तु कर्तुरेव । आनुषङ्गिकं तु दक्षिणादि ऋत्विजामपि भवति । दक्षिणादेर्मुख्यफलाभावरूपानुषङ्गिकत्वादेव ऋत्विजो यजन्तीत्यत्र फलस्य कर्तृगामित्वे विहितमात्मनेपदं न भवतीत्येतत्प्रासङ्गिकम् । नैवं देवालयधर्मशालातडागप्रपारामादिनिर्माणविषये । सा हि क्रिया स्वयं विनष्टापि तत्तद्रूपेण चिरकालमवतिष्ठते । फलं च तदीयं लोकोपयोगादि तदपि मुख्यमेव । तस्य तदर्थमनुष्ठितत्वात् । नह्येवं यज्ञादि ऋत्विजां दक्षिणाप्राप्त्यर्थमनुष्ठीयते नाम । पूर्तादेः कर्मणोऽपूर्वद्वारा जायमानं स्वर्गादिफलमपि मुख्यमेवेत्यवश्यं मन्तव्यमेव । अन्यथा 'आत्मार्थे प्राणिनां प्रवृत्तिः' इति सिद्धान्तविरोधः स्यात् । उल्लिखिता चेयमात्मार्थे प्रवृत्तिर्महाभाष्ये "हेतुमति चेति" सूत्रे 'सर्व इमे स्वभूत्यर्थं प्रवर्तन्ते, न हि कश्चित्परोऽनुग्रहीतव्य इति प्रवर्तते' इति । श्रुतिश्च 'आत्मनः कामाय सर्वः प्रियो भवति' इत्याद्या आत्मप्रियत्वं ब्रूते । अत एव च न कस्यापि कर्मणो निष्कामत्वं सम्भवति । तदुक्तं मनुना 'न चैवेहास्त्यकामता' इति । सकामत्वं च निषेधति मनुः 'कामात्मता न प्रशस्ता' इति । गीतास्वपि 'कृपणाः फलहेतवः' इति सकामा—फलेच्छया प्रवृत्तिर्निषिध्यते । ननु किमित्येवं विरुद्धं प्रोच्यते? । कथङ्कारं हि निष्कामं कर्म सम्भवेन्नाम । उच्यते—यद्धि लौकिकं कार्यकारणभावं मुहुर्मुहुरनुभूय तत्तेषां कर्मणां प्रातिस्विकं फलमुद्दिश्य लोकैः प्रवृत्यते नाम तत्सकामं कर्म । तच्च बन्धाय सुखदुःखसाधनभूताय प्रभवति । नेतरत्फलाशाकर्तृताभिमानादिशून्यं केवलं प्रवाहपतितत्वेनानुष्ठीयमानं,नहि नहि स्वयमेव जीवस्वभावाज्जायमानं कर्मेत्यवश्यमभ्युपेयम् । अन्यथा मोक्षस्यासिद्धिप्रसङ्गः । तथाहि—'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति भगवदुक्त्यनुसारं सर्वथा कर्मत्यागोऽशक्यः । तदपि भगवतोक्तं 'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' इति । कर्मणश्च तदनुगुणं फलप्रदानं स्वभाव एव । एवं च बीजाङ्कुरन्यायेन कर्म च फलं चेति चक्रवत्संसारपरिवृत्तिरपरिहार्या । तदुक्तं रामगीतायां

"पुनः क्रिया चक्रवदीर्यते भवः" इति ।

ततश्च मोक्षो न स्यादेवेति प्रासङ्गिकम् । प्रकृतं तु फलोत्पादनविषये लोकेष्वदृष्टकार्यकारणभावं धार्मिकं कर्मैव परमसुखप्रदाने परमसमर्थम् तत्रैव च दृष्टमपि फलं सम्भवेदित्यतीव शोभनं दुग्धशर्करान्यायेनेति । तत एव 'सुखं च न विना धर्मात्' इति यत्प्रोक्तं तत् सामञ्जस्येन बुद्धिमारोहति । नोचेत्को नाम सुखस्य

धर्मस्य च सम्बन्धः ? । प्रत्युत क्लेशानामानन्त्यं धर्मानुष्ठाने सर्वानुभूतम् । पूर्तादि-कर्मवद्दृष्टादृष्टोभयरूपेणापि धर्मार्थकाममोक्षस्वरूपचतुर्विधपुरुषार्थप्रापणद्वारा परम-सुखप्रदत्वे नितरां समर्थं काव्यादिग्रन्थनिर्माणमेव । किं चैकदेशेन तावत् प्रपारामधर्मशालाद्यपेक्षया काव्यादिग्रन्थानामेव समधिकतया लोकोपयोगित्वं चिरस्थायित्वं च । नहि दृश्यन्तेऽधुना पुरातनकालिदासादिमहाकविविरचिततत्त-त्काव्यनाटकादिग्रन्थसमकालिकानि तैस्तैर्नृपतिपुङ्गवैर्निर्मितानि प्रासादप्रपाराम-महासरआदीनि । यानि च कानिचिद्दृश्यन्ते समग्रतयावशेषतया वा न किल तानि सर्वैरुपभोक्तुं शक्यन्ते किं तु तत्तद्देशस्थैस्तत्र प्रसङ्गतः समागतैर्वा । अपि च यानि दरिद्रेभ्यो निर्मीयन्ते न तानि धनिकोपभोगयोग्यानि । इमानि तु ग्रन्थरत्नानि निखिलानां मनांसि समादधति । चतुर्विधपुरुषार्थप्रदत्वं काव्यस्य प्रति-पादितं साहित्यदर्पणे भामहोक्त्या: —

" धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम "॥ इति ।

अत्र च निबन्धनमिति कैश्चिदादृतः पाटः । स च काव्यकर्तुरेव फलप्रदत्वप्रति-पादकः न तु तदास्वादकस्य । अयं तूभयसङ्ग्राहकत्वाद्रुचिरः । काव्यनिषेवणे भगवदंशभूतानां महाविभूतीनां स्तुत्या तदीयचरितादिकीर्तनेन च वाचः पावित्र्यं सम्पद्यते । पुरुषार्थसाधकत्वं तु साधुकाव्यनिषेवणस्यैव । तत्र साध्विति विशेषणं काव्यस्य वा भवतु निषेवणक्रियाया वा । इष्यते तूभयत्रापि सम्बन्धः । तदर्थं तन्त्रावृत्त्यादि किमप्याश्रयणीयं नाम । अन्यथा साधुकाव्यस्य यथा कथञ्चिन्निषेवण-मिति वाश्लीलादिप्रधानकाव्यस्य सम्यङ्निषेवणमितिवानिष्टोऽर्थ आपद्येत । न च तदिष्टमाधुनिककिर्लोस्करप्रभृतिभिः प्रकाशितस्य सारस्वतस्य नहि नहि नाना-वर्णसङ्करसमूहस्य—( तत्र हि सारस्वत इति पवित्रतमं शब्दं प्रयोक्तुमपि न युक्तम् ) निषेवणमपि पुरुषार्थप्रापकं स्यात् । *पुरुषार्थे चेतमितान्तं विरुणद्धि । तथा साधु-काव्यस्य यथा कथञ्चिन्निषेवणमपि नातीवोपयुज्यते । यथा कथञ्चिन्निषेवणे भ्रम-प्रमादादिभिर्विरुद्धार्थ ( अनर्थ ) ग्रहणस्यापि सम्भवात् । अत एव श्रीवाल्मीकि-रचितकाव्याद्रामायणादपि भगवद्भक्तानां धुरि कीर्तनीयो महात्मा विभीषणोऽपि भ्रातृद्रोही दुरात्मेति, पतिव्रतासु प्रथमनिर्देशार्हा तारापि देवरमङ्गीकृतवती न

* एतन्नामकं पं. सातवळेकरसम्पादितं मासिकं पुस्तकम् ।

पतिभिन्नसेवनं सतीत्वविघातकमित्यादीन्दुस्तर्कान्निरर्गलं प्रलपन्त्यधुनातना विद्वांसः। ततश्च काव्यमपि तन्निषेवणमपि च साध्वेवापेक्ष्यते नासाधु। निषेवणशब्देन च न केवलमन्यकृतस्य काव्यादेरध्ययनाध्यापने एव ग्राह्ये किं तर्हि स्वयं नव्यकाव्य-निर्माणमप्यवश्यं तत्रान्तर्भावयितव्यं। किं च नव्यकाव्यनिर्मितेरेव विशेषतो धर्मापादकत्वं, यतो भगवान् महाभाष्यकारः 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति' इति शब्दप्रयोगे धर्मं समुपदिशति। तत्र चैकस्यापि शब्दस्य प्रयोगे चेदिह च परस्मिंश्च लोके कामदोहनं भवति किमु वक्तव्यं काव्यादिग्रन्थनिर्माणे तत्स्यादिति। अत्र च भाष्योक्तौ चकारेण अयं परश्च लोकः समुच्चीयते। अतः शक्यते वक्तुमिह परलोके च कामधुग् भवतीति। अनुभवसिद्धं च ग्रन्थकर्तृणामिह लोके कामदोहनम्। प्रत्युत स्वर्गे एव तददृष्टाधीनं श्रद्धासापेक्षं च। कविप्रवरमाघेन—

" कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः॥ "

इत्यस्यैकस्यैव श्लोकस्य कृते विशेषतस्तत्रत्य 'ही' शब्दस्यैव कृते लक्षत्रयं लब्धम्। भारविणा च 'सहसा विदधीत न क्रियाम्' इति प्रसिद्धेन पद्येन लक्षद्वयं रूप्यकाणामधिगतमित्यादिभिः कथाभिरेतिह्येऽपि प्रसिद्धं काव्यादिग्रन्थनिर्मातृणामेतल्लोके कामधुक्त्वम्। महाभाष्यवाक्ये चकारमपठतां तदशक्यम्। मम्मटोऽपि 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे' इति काव्यनिर्माणस्य नैकानि फलानि प्रथितवान्।

एवमनेकैः प्रकारैः काव्यविरचनां परमश्रेयस्करीं मनसि कुर्वाणा अस्मत्प्रियसुहृदः भागवतोपाह्वाः श्रीमन्तः सखारामशास्त्रिणो निसर्गलब्धया कविप्रतिभया मण्डितान्तरङ्गाः श्रीमत्या अहल्यायाश्चरितं ग्रथितुमैच्छन्। विद्यमानैरेव तैरहमभ्यर्थितोऽस्योपोद्घातलेखनकर्मणि। दैवदुर्विलसितस्यापरिहार्यतया न सन्ति ते द्रष्टुमेतस्य मुद्रणमित्यहो दौर्भाग्यं। प्रकाशकैः " राजोपाध्ये " इत्येतैः पण्डितवर्यैर्बाळाचार्यखुपेरकरशास्त्रिभिश्च पुनस्तत्र प्रवर्तनेन प्रादाय्यवसरः सारस्वतसेवने इत्यभिनन्द्यन्ते ते।

अथ निरीक्ष्यते किञ्चिच्चरितं श्रीमदहल्यायाः । तत्र तावद्यावधि महता वाप्रसिद्धत्वादिकारणाल्लघुना वा केनापि कविना गैर्वाण्या वाण्या अवर्णितस्य प्रकृतचरितस्य वर्णनात्प्राथम्यसम्मानमनायासेनैवालभतायं कविमहाशयः । तत्र च अद्ययावद्विद्यमानेषु काव्यग्रन्थेषु पुराणेष्विवानुपलभ्यमानं 'मल्लारिरुवाच' 'अहल्योवाच' 'तुकोजी उवाच' इत्यादि प्रभ्नतानेन कविना स्वप्रतिभायाः स्वातन्त्र्यमौच्छृङ्खल्यापरपर्यायं प्रकटीकृतम् । महाभागा वाचकवराः। उच्छृङ्खलत्वमत्र गुण एव न दोषः। उपवर्णितं हि तथा महाकविना माघेन—

'अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥'

इत्यादिना । यथा च नाट्यशास्त्रीयं

'शृङ्गारवीरयोरेकः प्रधानं यत्र वर्ण्यते ।
प्रख्यातनायकोपेतं नाटकं तदुदाहृतम्'

इतीमं नियममुल्लङ्घ्य करुणरसप्रधानमुत्तररामचरितं नाटकं सम्प्रणीय

'एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक्पृथगिव श्रयते विवर्तान् ॥
आवर्तबुद्बुदतरङ्गमयान्विकारा-
नम्भो यथा सलिलमेव हि तत्समस्तम् ॥'

इत्यादिना करुणस्यैव मुख्यं रसत्वं प्रतिपादयन् भवभूतिर्न किल महाकवित्वभूतिं जहाति । एवमेवैनं वान्यं वैतत्सदृशं सम्प्रदायं कवीनां प्रविजहदप्ययं कविर्न खलु कवित्वभाङ् न भवति । न हि कविसम्प्रदायानुल्लङ्घनमेव कवित्वस्य प्रयोजकम् । यतोऽकुर्वन्नपि कश्चिच्छ्लोकं नैव हि कोऽपि समुल्लङ्घयति कवीनां कमपि सम्प्रदायम् । किन्तु रसात्मकस्य सहृदयाह्लादकस्य काव्यस्य निर्माणमेव कवित्वस्य प्रवृत्तिनिमित्तम् । न च सम्प्रदायोल्लङ्घनेन व्याकरणाद्यशुध्या वा तस्य काव्यत्वं नेति न तत्प्रवृत्तिनिमित्तं कवित्वस्येति वाच्यम् । सर्वथा निर्दुष्टस्य काव्यस्यासम्भवात् । अतएव काव्यीयदोषप्रतिपादकेष्वपि श्लोकेषु दोषा दृश्यन्ते । यथा—

तयोर्विपर्ययौ विध्यनुवादायुक्तते तथा ॥ सा. द. ७।११ ॥
अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे ॥ सा. द. ७।२० ॥

अतएव च किंवदन्ती—भगवान्मम्मटोऽपि निर्दुष्टकाव्यादर्शनदुःखादेव न किल सुखं प्राणान्विजहाविति । उदाहृतदर्पणोक्तवाक्ययोराद्ये यतिभङ्गोऽन्त्ये पञ्चमगुरुत्वं चेति दोषः सुस्पष्टः । तथा व्याकृतिकृदग्रसरो भगवान् पाणिनिरपि स्वीये जाम्बवतीपरिणयाख्ये काव्ये—

'अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुं करोति'

इत्यत्र 'अपश्यती' इति नुम्रहितं जग्रन्थ यस्य व्याकरणं वेदाङ्गत्वमलब्ध । नैतेन दोषाणां सौष्ठवं प्रतिपाद्यते । दोषास्तु दोषा एव । अत एव 'दोषास्तस्यापकर्षकाः' इत्युच्यते । नैतावता तस्य काव्यत्वं हीयते नाम । यतो महाकाव्येष्वपि नैके दोषा दृश्यन्ते । दर्शिताश्च शाकुन्तलेऽपि तद्व्याख्यात्रा राघवभट्टेन । यद्यपि 'न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः म्लेच्छा माभूमेत्यध्येयं व्याकरणम्' । इत्यादिना भगवान् महाभाष्यकारो व्याकरणाध्ययनप्रयोजनकथनसमयेऽपशब्दप्रयोगं म्लेच्छत्वापादकं निगदति, तथाप्यर्थवादविधया तस्य दोषापादकत्वे एव पर्यवसानमतएव 'आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत् इत्यत्र' 'याज्ञे काले इत्यर्थः' इति व्याख्यच्छ्रीमान् नागोजीभट्टो भाष्यप्रदीपोद्योते । कविकाव्यशब्दौ चेमौ धीरधैर्यशब्दाविवान्योन्याश्रितौ । कवेः कर्म काव्यं, काव्यकर्ता च कविरिति । न तु कौतीति कविरिति केवलो योग आश्रयितुं युक्तः । तथा सति मण्डूकानामपि तत्सद्भावप्रसङ्गात् । कवेः कर्म च प्रसिद्धकाव्यात्मकमेव ग्राह्यं न तु तदीयं भोजनगमनादिकृषिवाणिज्यादि वा । धीरधैर्यशब्दयोर्यद्यपि प्रथमं धियं रातीति व्युत्पाद्य पश्चाद्धीरस्य भावो धैर्यमिति व्युत्पत्त्यान्योन्याश्रयः परिहर्तुं शक्यः । तथापि न स प्रथमं बुद्धिमारोहतीति न तस्य वाच्यत्वम् । 'यस्मिन्शब्दे उच्चारिते योऽर्थो नियमेन बुद्धिमारोहति तत्तस्य वाच्यम्' इति हि मीमांसकरीत्या वाच्यस्य लक्षणम् । अतो धैर्यविशिष्ट एव धीरशब्दवाच्यः । 'धीरो मनीषी ज्ञः प्राज्ञः' इत्यमरोक्तस्तु पश्चाद् बुद्धिस्थत्वाल्लक्ष्यः । एवमेव हरिगवादिष्वनेकार्थेषु मन्तव्यम् । अत एव च भगवाञ्जैमिनिः सूत्रयामास 'अन्दायश्चानेकार्थत्वम्' इति ।

कथिनानेनानेकगुणमण्डितेप्यस्मिन्काव्ये इन्दोरङ्कवद्वाभिज्ञानार्थे धीवरबालप्रदत्तबिभीतकरेखाङ्कवद्वा पुनर्मण्डनायैव किमु केचिद्दोषा अवस्थापिताः ।

यथा १ ‘अतोऽर्थयत्स मल्लारिः’ स. २ श्लो. २० अत्र अर्थधातोराणर्षीयत्वादात्मनेपदं न्याय्यम्। ‘प्रार्थयन्ति शयनोत्थितं प्रिया’ इतिवत् ‘निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते’ इति वा समाधेयम्। २ ‘विदुषीमन्वमंसत’ स. २।६४ नाम्रानोरन्वर्थकत्वम्। ३ ‘निरालसत्वं मधुभाषणत्वं’ स. ३।५ इत्यत्र निरलसत्वं मधुरभाषित्वं इति सम्यक्। ४ ‘नीलाञ्जनगिरेस्पर्धिकेशपाशधरा’ स. १३।५ इत्यत्राहल्यासौन्दर्यवर्णने तत्केशपाशस्य नीलाञ्जनगिरेरुपमा च न तादृङ्मन आह्लादयति। ५ ‘साहल्यावसत् क्षेत्रमाहेश्वराख्ये’ स. १२।३ इत्यत्र माहेश्वराख्ये क्षेत्रे इत्युद्देश्यविधेयभावः पृथक्पादमाध्य एव शोभते। ‘महेश्वरक्षेत्रकृताधिवासा’ इति वा विशेषणरूपेण समर्थनीयम्। ६ ‘निजयां रिपुतः प्रलब्धः’ स. ११।४३ इत्यत्र ‘प्र’ उपसर्गो न कश्चित्। ‘रिपुतोऽधिगम्यः’ इति पाठ्यम्। ७ ‘सर्वाञ्जनान् सहजमेव वशीचकार’ स. १०।१६ इत्यत्र ‘सहज’ शब्दः ‘हेलया’ ‘अनायासेन’ इत्यर्थकः प्रयुक्तः स चाप्रसिद्धः। ८ नवमसर्गान्तसङ्कल्पे ‘चन्द्रचूडकारस्थानं नाम नवमः सर्गः’ इत्यत्र कारस्थानशब्दोऽपि गीर्वाण्या प्रयुक्तोऽनेन कविना।

प्रियवाचकमहाशयाः इदानीमत्रत्या गुणा विलोकयन्ताम्। अस्य कवेः प्रतिभा नितान्तं प्रशंसामर्हतीत्यस्मिन्विषये न विवादावकाशः। इदमेकमेवात्र विषयेऽलं प्रमाणं यन्महाकविना कालिदासेन रघुवंशीयाननेकान्महापुरुषाननुद्दिश्य नवदशसर्गात्मकं महाकाव्यं विरचितम्। अनेन त्वेकामेव स्त्रियमुद्दिश्य द्व्यूनतावत्सर्गात्मकं तादृगेव रसपरिपूर्णं काव्यमारचितमिति। दोषविषये तूक्तमेव पूर्वम्। किञ्च च तत्रापि ‘तं पातयां प्रथममास’ इत्यादि प्रसिद्धमेवेति न पुनश्चर्वितं चर्व्यते।

अनेन हि प्रतिभाशालिना कविना वाचकानामन्तर्हृदये आदर्श इव यथायथं निखिलचारितविर्भावाय वीरपत्नीनां धुरि कीर्तनीयायामस्याः श्रीमदहल्याया जन्म च बाल्यं च प्रथमे सर्गे समुपवर्णितं। तत्र प्रथमं यावदपेक्षं कुलसम्बन्धमुपवर्ण्य ततोऽस्या जन्म समनुवर्णितं। तत्र प्रकरणे त्रयाणामपत्यानां दयाविनययत्नानामुपमा सहृदयहृदयहारिणी। तत्रापि ‘अपत्यैस्त्रिभिरन्वितौ’ इति बहुवचनमुपमानगतबहुवचनानुसारं समधिकं हृदयमावर्जयेदित्यन्यदेतत्। तथा जन्मकुण्डलीग्रथनमप्यवलोकनार्हम्। अहल्याशब्दप्रवृत्तिनिमित्तविषयेऽपि हल्यां मेष-

पालिकां वृत्तिं परित्यज्य राष्ट्रपालनवृत्तिस्वीकारकल्पना कल्पकताशालितां बुद्धेः परिकल्पयति । रामावतारकालिकमहामुनिगौतमप्रियधर्मदाराणामिवास्या अपि तदानीन्तनसतीनां प्रथमगणनार्हत्वमप्यस्यामहल्याशब्दप्रवृत्तावुत्प्रेक्षितमनेन ।

द्वितीयस्मिन् सर्गे चरित्रनायिकाया अहल्याया विवाहो वर्णितः । तत्र ' संसारे बध्यते तेन वरः स्वयमहो सदा ' स. २।४. इत्यनेन ' एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ' इति विवाहविधौ पठ्यमानस्य ऋग्वेदसंहिताया अष्टमाष्टकस्थतृतीयाध्यायगतस्य मन्त्रस्यार्थो ध्वनितः । तथा ' गृहकर्मणि निष्णातां सदान्वहितमानसां ' स.२।५५ इत्यस्मिन् पञ्चपञ्चाशत्तमे पद्ये 'सदा प्रहृष्टया भाव्यं गृहकृत्येषु दक्षया ' इत्येतस्य मनुस्मृतिगतस्य वचनस्यार्थोऽनूदितः । अष्टाचत्वारिंशत्तमे श्लोके विरचिता कर्मगुप्तिः कवित्वस्य सम्यक्त्वं प्रकटयति । ' बटवा ' इति वा 'जमदाड' इति वा महाराष्ट्रभाषायां प्रोच्यमानां सर्वताम्बूलसाहित्यपेशीमुल्लिख्य मुखरञ्जनतः सैन्यरञ्जनोत्प्रेक्षापि सम्यङ्मन आवर्जयति । तथैवाक्षतारोपणेन क्षतारोपणाभावकल्पना । विवाहवर्णने चास्मिँल्लग्नेष्टवर्गसहितमुहूर्तवर्णनपूर्वकं वाङ्निश्चयदेवप्रतिष्ठागौरीहरपूजनतैलवस्त्र ( तेलसाडी ) मधुपर्कविवाहमङ्गलसूत्रबन्धनविवाहहोमसप्तपदीस्नुषामुखावलोकन (सुनमुख) गृहप्रवेशादीन् शास्त्रत आचारतश्च प्राप्तान् धार्मिकान् विधीन् वधूवरयोर्मिथो रङ्गप्रक्षेपक्रीडाकरधृतपूगफलोन्मोचनैकपात्रभोजनमुखवीटिकाविच्छेदनामग्रहणादीन् लौकिकान् सकौतुकोत्सवाचाराँश्च वर्णयन्नसौ कविर्बाण इवाल्पाल्पानामपि कथांशानामपरित्यागेन नूनं चित्रमिव विवाहस्य वाचकानां चक्षुषोः पुरतोऽवस्थापयति ।

तृतीयसर्गे प्रसङ्गसङ्गत्या संसार–गार्हस्थ्य-सुखं समुपवर्णितम् । तत्र दशमश्लोके प्रतिचरणान्ते ' आरी ' इति प्रासः साधितः । षोडशश्लोकमारभ्य विंशतिश्लोकपर्यन्तं सौधवर्णनं चारुतरम् । तत्र च स्वर्गरूपकं नितान्तं स्वान्तं हरति । ततोऽचिरादेवाहल्यादेवी गर्भमाधत्तेत्युपक्रान्तम् । इदमत्र चित्ते करणीयं सूक्ष्मनिरीक्षकैर्वाचकप्रवरैर्यत्समयोऽयमासीदनायासलब्धो वर्णयितुमुत्तानश्रृङ्गारचेष्टा अतिवेलं । किञ्च ऋतोर्वर्षाणां वर्णने शोभनोऽयमवसरः । नितान्तं हि समुद्दीपिका वर्षाः श्रृङ्गारस्य । वर्णितं च तत्त्वं तासां ' मेघालोके भवति सुखिनोप्यन्यथावृत्ति चेतः ' ' उपरि घनं घनरटितं ' इत्यादिषु । यस्मात् प्रसूतिकालो वैशाखे सुदि श्रीमत्या अहल्याया अतो गर्भधारणस्य कालः प्रावडित्यर्थत

एवायातम् । एवं च प्रसङ्गेनानेन क्रमागतेन न तु शिशुपालवधे किरातार्जुनीये वा नवमदशमसर्गवद् बुद्धिपरिकल्पितेन शृङ्गारवर्णनं परित्यज्य द्वित्राभ्यामेव श्लोकाभ्यां ' रतिस्मरौ मानवदेहिनौ किं ' इति सूत्रवत्संक्षेपेणैव समुल्लिख्याग्रे प्रवृत्तोऽयं कविः। प्रशंसार्हं चैतत्। ततोऽग्रे गर्भवृद्धिर्दोहदो गर्भवत्याः ' पूगफलैर्वस्त्राभरणं ( ओटी-भरण ) तस्यानेके प्रकारा इत्यादिवर्णनमतीव सूक्ष्मनिरीक्षणं व्यावहारिकं कवेः प्रकाशयति । तदानीं चाहल्यादेव्या अपि सत्यमेव संसारः सुखावहः समभूत् । यतः समृद्धं राज्यं, वशे पतिः, एकः पुत्रः पुत्री चेति, किं च तस्या अपि पुत्र इतीयं परा किल कोटिः सुखस्य। दम्पत्योरनयोर्गार्हस्थ्यफलोपभोगे समानेऽपि समधिकांशोऽस्या एव यतः सा न्यवारयत्तं व्यसनादितः ।

चतुर्थसर्गे 'कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' इति कालिदासोक्त्यनुसारमहल्यायाः परमगार्हस्थ्यसुखं न बहुकालमवस्थितं किन्त्वचिरादेव दुर्विलासेन तदीयभागधेयस्य वैधव्यदुःखानुभवः समापतितोऽस्याम्। जाटैः सह समारब्धे युद्धे तत्पतिः खण्डेरावो रिपुप्रहितलोहगुलिकया हृदि विद्धः सन् युद्धभूमावरिसम्मुखः प्राणांस्त्यक्त्वा सूर्यमण्डलं भित्वा तदूर्ध्वं तैजसाल्लोकान्प्रपेदे । प्रसङ्गमिममुपलभ्य समासतो युद्धं वर्णितम् । तत्र यागरूपके जाटानाहुतीः परिकल्प्य खड्गञ्च स्रुवं सम्भाव्य राजपुत्रमध्वर्युत्वेन समुल्लिख्यासङ्ख्याताहुतीर्याजयामासासौ कविस्तेन । तत्र ४८ तमे पद्ये द्विर्लकारप्रासो दर्शनीयः । श्रीमत्या अहल्यादेव्या न केवलं पतिनिधनदुःखमेवासीत् किन्तु विद्यमानेऽपि भर्तारि तस्य दुर्व्यसनितया पाखण्डत्वेन च तदादित एव केषुचन दिवसेषु समभवदारम्भो दुःखोपभोगस्य तदीयस्य । एवंप्रकारैरनेकहेतुभिर्वैराग्येणाधिष्ठितं चित्तं तदीयम् । तत एव च तस्या उर्वरिते सर्वस्मिन्वयसि शिवाराधनादिनानाविधधार्मिककर्माणि किञ्च निर्लिप्तेन मनसा कृत्स्ना राज्यव्यवस्थापि राजकार्यधुरन्धराणां महाराजपुरुषाणामपि व्रीडामावहन्ती सर्वाङ्गसौन्दर्यवती समजनि । सत्यमेव मृत्कुसुमसंसर्गन्यायेनेयं सती देव्यहल्या न पत्युर्दुर्गुणानां गन्धमपि जग्राह किन्त्वीषदंशेन तस्मिन्नेवास्याः संसर्गेण सुपरिणाम आसीत् । यतो न चेदभविष्यत्संसर्गोऽस्यास्याः नूनं प्रागेव समयादस्मान्निखिलानां दुर्गुणानां दुर्व्यसनानां चैकं समुदितं स्थानं समभाविष्यदसावित्यत्र नास्ति संशयस्य लेशोऽपि । एवंप्रायं चतुर्थे सर्गे सम्यग्वर्णितं वृत्तम् ।

पञ्चमे सर्गे खण्डेरावस्य कृते तत्तातेन मल्हारिरायेण पत्न्या अहल्यया च कृतः शोको वर्णितः । सत्यमेवायं शोको रतिविलापमजविलापं वातिशेते इतीयमुक्तिर्नातिशयोक्तिकोटिमाटीकेत । अतीव ह्यत्र निसर्गमनुसृत्य सरलया वाण्या हृदयहारिवर्णनं दृश्यते । तस्याश्च सहगमने प्रवृत्तिस्तस्माच्च तस्यास्तत्कर्तृकं निवारणं सर्व एवायं प्रसङ्गः सर्वथा करुणरसस्य नितान्तमनुकूलत्वेन परिपोषकः

तदन्वजविलापे स्नातक इवाहल्याशोकापनोदाय तद्गुरुरानीतोऽनेन कविना। तयोश्च संवादः पञ्चत्रिंशता श्लोकैर्ग्रथितः । तत्र च व्यवहारं शास्त्रं युक्तिं सर्वमप्यपरित्यज्य तस्या गुरुणा तां सहगमननिश्चयान्निवारयितुं प्रायत्यत । परन्तु तत्र लेशतोऽप्यनुपयुक्ततया तस्य गुरूपदेशस्य कर्मधारयाश्रयणेन जडत्वं कल्पितं कल्पयति कल्पनाकौशलमेतत्कवेः । पुनश्च तस्या गुरुः श्वशुरश्चेत्येतौ द्वावपि मिलित्वा परया काष्ठयोपदेशस्य कथञ्चित्तां निवारयामासतुः निश्चयादस्मात् । बह्वयोऽस्येतरा भार्याः किञ्च शुन्यपि काचन तमनुमम्रुरित्यन्ते वर्णितम् । सर्गस्यास्य पुनरन्ततस्त्रयः श्लोका विशेषदर्शनार्हाः । क्षत्रियशूराणां हि प्रसङ्गतः सञ्जातेऽपि शोकेऽग्न्यातपसम्प्रयोगात्तप्तस्यापि वारिणः शैत्याप्तिरेव स्वभाव इव प्रतिकृत्या शत्रुवधे प्रवृत्तिरेव नितरां शोभते । अन्तिमश्लोकद्वये 'करिष्यामि 'हरिष्यामि' 'वरिष्यामि इत्याद्याख्यातजातं काव्यशोभां संवर्धयति । षष्ठे सर्गे समुपवर्णितमेतत् ।

वार्धक्यमनुभवता मल्हारिरायेणात्मनः पश्चात् प्रजानां सम्यक्पालनेन हितं कथं भवेदिति चिन्ताव्याकुलमानसेन सता तदर्थं नास्ति चेद्दैवस्याकृपालुतया पुत्रो मास्तां नाम । स्नुषया तु प्रजाकल्याणं साधयिष्ये इति बुध्या निवारितवांस्तां सहगमनव्यापारान्महता प्रयासेन सह तद्गुरुणा मल्हारिः षष्ठे सर्गे। परं च निजप्रपितामहानामुद्धाराय गङ्गां भुवमानेतुं तद्वेगधारणार्थं शङ्करञ्च भृशं तपस्तप्त्वा सम्प्रसाद्य पुनः शिवजटासु लुप्तया भागीरथ्या भगीरथ इव राज्याद्विरक्तायामहल्यायां स मल्हारिराजोऽतिमात्रं दूयते स्म । 'तथापि नोद्यमस्त्याज्यः' इति न्यायेन भगीरथ इवैव तां स्वविधेयकर्मपथे कर्तुं भूयोऽपि प्रायतत। तत्र चायमपूर्वं यशो लेभे । सा ह्यनन्यादृशं प्रजाः पालयामास शत्रूंश्च विजिग्ये गृहीत्वा निजश्वशुरान्निखिलां दण्डनीतिं यथायथम् । तदेतद्दण्डनीतिशास्त्रमनेन मिषेण सम्यग्वर्णितं सर्गेऽस्मिन् सप्तमे । एवं च पुत्रमरणेन दुःखितोऽपि मल्हारिराजः स्नुषासद्गुणैर्दुःखेऽपि तावत् सुखममन्यत । एवं हि सर्वस्य जगतः

प्रवृत्तिर्यत् सुखेऽपि दुःखं दुःखेऽपि सुखं च मन्यते, स्वभाव एव एष सर्वेषां प्राणिनां तत एव च प्रवृत्तिरनुभूयते भूयः।

अष्टमे सर्गे मल्लारिरायः स्नुषासङ्क्रान्तराज्यलक्ष्मीकः कञ्चित्कालं निर्भृतः सुखमास्त। ततश्च चरमे वयसि स्वसुकृतैरुत्तमानां गतिं प्राप। अहल्यायाश्च मनस्तेन नितरां दूयते स्म। पितृतुल्यं हि तदीयं तस्यां प्रेम । राज्यशासनं यथायथम-शिक्षयच्च सः। यावदियं शोकं कथञ्चिन्निगृह्य पूर्ववत्प्रजापालनकर्मणि मनः प्रवर्तयति तावदेव 'छिद्रेष्वनर्था बहुलीभवन्ति' इति न्यायेन तत्सुनुरपि पिशाचपीडया तनुमिमां परितत्याज। विचार्यतां पूर्वं पतिस्ततः श्वशुरोऽचिरादेव च ततो राज्याधिष्ठितः सुतः म्रियते कथं दुःखपरम्परा कथं वा सोढव्याति कोमलहृदयया अबलया?। अपि च दुःखमिदं सर्वमेकतः कृत्वा प्रजापालनं तत्परेण चेतसा कर्तव्यमित्यतिमहती कर्तव्यनिर्वाहकता समापतिता तस्याम्। निर्व्यूढा च सा तया तस्यामप्यवस्थायां सम्यक्तया। यद्यपि पुत्रोऽसौ न तादृग्-गुणवान् धार्मिको वीरो वा तथाप्यपत्यस्नेहः खलु सः। यथाकथञ्चन भवतु पुत्रः 'कुपुत्रो जायेत क्वचिदपि कुमाता न भवति' इति न्यायेन तदीयदुःखेन पित्रोर्दुःखमेवेत्यत्र न संशयः। एवं च जन्मनि सकलेऽस्याः प्रायो दुःखमेव बहुलं 'दुःखसंवेदनायैव रामे चैतन्यमागतम्' इतिवत्। तत एव चास्या विरक्तिः धर्मकार्यतत्परता च नितान्तमासीत्। एवमष्टमे सर्गे सङ्कटपरम्परा प्रदर्शिता एतदीया।

एवमनेकसङ्कटग्रस्ता तत्रापि सर्वदुःखाग्रसरं सुतवियोगदुःखशल्यं हृदि धारयन्त्यप्यहल्या विधिवदभियुक्तेन मनसावश्यं विधेये प्रजापालनाख्ये दीनो-द्धाराख्ये च निजे कर्तव्येऽतीव तात्पर्यतो वृत्तिमवस्थापयामास। ततश्च 'मनस्वी कार्यार्थी न गणयति दुःखं न च सुखं' इति न्यायं सम्यगनुससार। तत्रापि च तस्याः सत्त्वपरीक्षायै नु तदीयः सचिवमुख्यः कश्चिद्गङ्गाधरचन्द्रचूडस्तस्यै दुद्रोह। तत्र तस्य वयसा साकं धनमानलाभो ववृध इत्येतस्मिन्विषये उत्प्रेक्षितं कविना यथा—अहल्याया राष्ट्रे कुत्रापि लोभादिदुर्गुणानां वासाय स्थलं नासीदितीव सुगुप्तं मन्त्रिप्रवरगङ्गाधरचित्तेऽवस्थातुं यतते स्म किं? इति। किञ्च गङ्गाधरोऽसौ चन्द्रचूडोपाह्वः फलकामुको भूत्वा लोभवृक्षसंवर्धने प्रयेते परन्तु फलं तु तस्य नाशादेव प्रत्युत तस्मादेवान्वतस्तदन्तोऽभवदिति 'इष्टार्थस्यानवाप्तिश्च तदिष्टार्थ-

समुद्यमात्' इति लक्षणलक्षितो विषमनामालङ्कारः कुशलतया ग्रथितः । प्रसङ्गतो लोभश्च संवर्णित, तत्र नैकालङ्कृतयश्चित्राश्च कल्पना अवश्यं वाचनीया ग्रथिताः । ततश्च स चन्द्रचूडो भगवतश्चन्द्रचूडस्य कृपया प्राप्तबुद्धिमत्तयाऽहल्यया हेलयैव विजिग्ये पेशवेराघोबापि । स्त्रीषु जितासु ताभिर्वा स्वस्मिन् जिते उभयथापि यशोहानिरेवापतेत्युष्मास्विति प्रसिद्धं तस्याः सन्देशचातुर्यं, स्त्रीणां युद्धसन्नाहं· तत्र च 'अबला अपि प्रबला' 'मनोहरा अपि प्राणहरा' इत्यादिं विरोधाभासं च वार्णितवान् नवमे सर्गे ।

दशमे सर्गेऽस्या राज्यव्यवस्था वर्णनप्रसङ्गेन औदार्यं राज्यकर्माणि कौशलं प्रासङ्गिकी बुद्धिमत्ता इत्यादयोऽस्या गुणा वर्णितास्तथा हि देविचन्दनाम्नः कस्यचिद्वार्धुषिकस्य परलोकगतस्य भार्याया अनपत्याया द्रव्यकामुकं तुकोजिराजं धनलोभान्निवर्त्य तां यथेष्टं व्ययीकर्तुं परिसङ्ख्यातवती । तुकोजी च समुपादिष्टो यदेवं कामपि प्रजां मा पीडयेति । तथा तापिदासस्यापि भार्या मृतभर्तृका सती रक्षणार्थं बहुलधनं समर्पितुमुपागात् तां च मैवं विधेहीति निवार्य दानधर्मादिकं विधातुमभिदधौ । फडणीसनानातो नानाविधां पीडामनुभूय राघोबापक्षे स्थितकश्चन बर्वेसमुपाह्व उपदेशनेत्राञ्जनप्रदानेन युक्तदृष्टिं प्रापितः । इत्यादि सम्यक्तया वर्णितम् । अत्र सर्गे ४३ तमे श्लोके 'राष्ट्रीय' शब्दः प्रयुक्तः स च ह्रस्वः मध्यो न्याय्यः ' राष्ट्रावारपाराद्घखौ ' इति पाणिनिसूत्रात् ।

एकादशे सर्गे परराष्ट्रसम्बन्धे कथं वर्तितव्यं इत्येतस्मिन्विषये श्रीमत्याहल्यया तुकोजी सम्यगुपदिष्टः । तत्र टिपूसुलतानविषये स्वमन्त्रिगोविन्दरायविषये च मननीयं भाषणमस्या ग्रथितम् । फडकेहरिपन्तेन साकं संवादप्रसङ्गे त्वस्या अतीव चातुर्यं प्रदर्शितमस्मिन् काव्ये । ' स्वस्यौदने च घृतसूपमथानयन्त ' इत्यादयो वाग्व्यवहारा अपि दर्शनीयतया स्थापिताः । तत्र ' आकृषन्तं ' इतिपदं महाराष्ट्र्यां प्रोच्यमानस्याभाणकस्य विशेषतोऽनुकूलं स्यात् । ' वसईसमीपे ' समीकप्रसङ्गोऽपि सम्यक्प्रस्तुतोऽत्रसर्गे ।

द्वादशसर्गारम्भे नाटकादौ कर्ता यथा सूत्रधारमुखेनात्मानं स्तौत्येवं गुरुशिष्यसंवादरूपेण काव्यस्य तद्द्वारा स्वस्य च प्रशस्तिरुल्लिखितानेन कविना। अयमप्येको नूत्न एव सम्प्रदायः समाश्रितः काव्ये । तत्र च ' शरणीकरिष्ये ' इत्यस्य स्थाने ' शरणीकरोमि ' इति युक्तं भाति । अत्र सर्गे तुकोजी स्वयं

स्वभावतः निष्कपटवृत्तिरहल्यायां श्रद्धाभक्तिसमन्वितो यद्यपि तथाप्यन्यसंसर्गदोषतः कलुषितवृत्तिरभूद्यरुणश्च तयैवाहल्यया साकमतएवापाराध्यत् । तस्मिन् समये महादजीशिन्दे इत्यनेन सम्यगुपदिष्टः सः । इयं च स्वीयौदार्यस्यानुरूपमेवाक्ष-मतैनम् । इत्यादि विस्तृतं वर्णितम् ।

त्रयोदशे सर्गेऽहल्याया दिनचर्या प्रदर्शिता तत्र बहुत्र ग्रामादिशब्दचित्रं हृदयङ्गमम् । संशयमालाग्रथनं चापूर्वं काव्यग्रथनकौशलं प्रदर्शयति ।

चतुर्दशे सर्गेऽहल्यायाः सर्वस्मिञ्जगति यन्नामोद्गीयते तस्यादिमं निदानं तदीयपूर्तकर्मवर्णनं कृतमनेन कविना । अहल्याया हि राज्यपालनकौशलं शौर्य-मौदार्यं प्रसन्नत्वमित्यादयस्ते ते गुणा इतिहासमवलोकयत एव चित्ते प्रकटीभवेयुः । इमानि मन्दिरघट्टधर्मशालान्नसत्रादीन्याबालगोपाङ्गनं तत्तत्सु स्थानेष्वनिशं प्रत्यक्षीभवन्ति भृशमादरमुद्भावयन्त्येतस्याम ।

पञ्चदशे सर्गेऽस्या अतिमहत्प्रदानरूपं धर्मकार्यं वर्णितं । तत्रादौ श्लोके बलिं दातृत्वे उपमानत्वेन प्रकल्प्य तदपेक्षयाऽस्या दानं बहुपदत्वेन पदाश्रितय-विशिष्टाद्बलिप्रदानान्महादिति पदशब्दे श्लेषमुपजीव्योपमेये विशेषं प्रदर्श्योपमेया-धिक्यपर्यवसायीति व्यतिरेकालङ्कारो ग्रथित इति तयोरङ्गाङ्गिभावेन सङ्करोऽयं सञ्जातः । व्यतिरेकोऽयं वर्णितोऽस्यामेव शोभते । अस्मिन् कलियुगे हि नैतावद्दानं कस्यचित् । किञ्च बलिनापि न कलौ प्रदत्तमितिकृत्वाऽस्या एव महत्त्वम् । यः प्रतिकूले काले किञ्चिदनुतिष्ठति तस्यैव ' विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ' इति न्यायेन महत्त्वमन्नवत उपवास इव । तत्र चास्या विशेषतः प्रसिद्धेः कारणं रामेश्वरादिमहादेवतेषु गाङ्गेन वारिणा नैत्यिकोऽभिषेकः स च कात्स्न्येनोपवर्णितोऽस्मिन्काव्ये । एवमेवानेकेषु क्षेत्रेष्वद्यापि सम्यक्प्रचलितमेतदीयं चिरस्थायि धर्मकार्यं संवर्ण्य स्ववाण्याः पावित्र्यं संवर्धित-मनेन महाभागेन कविना ।

षोडशे सर्गे त्वहल्यायाः कन्यका मुक्ता नाम मृतं भर्तारमनुजगामेति प्राधा-न्येन वर्णितं तत्र च करुणरसस्य प्राधान्येऽपि तस्याः पुत्रप्राप्तिर्बाल्यवर्णनमित्या-दिना सङ्कीर्णत्वं प्राप्तम् । यथोत्तरे रामचरिते तृतीयेऽङ्के श्रीभवभूतिना कणेहत्य करुणवर्णनप्रवणतया परित्यक्तापि सीता पुना रामेण सङ्गमिता भागीरथीमाहात्म्यतो वनदेवतानामप्यदयया च सम्पादिता परं च सीतया पुत्रीकृतस्य कलभस्योद्दाम-

द्विरदपत्यभियुक्तस्य तस्मिन्विजयेन गिरिमयूरदर्शनादिना च मिश्रीकृतक्रमः समजनि न तु प्रथमाक्रान्त इव घनीभूतः सः । तत्रहि–" त्वया जगन्ति० " " अपूर्वकर्मचण्डालं० " " दुःखसंवेदनायैव० " " ते हि मन्ये महात्मनः " इति चतुश्श्लोकी करुणरसप्रस्थानस्य चतुःसूत्रीव परमसारयुता ग्रथिता । अत्र सर्गे च ' अननुकूलविधिर्यदि वर्तते ' श्लो० २६ इत्यत्रोद्देश्यविधेयभाव एकेनैव पदेन सङ्गृहीतः । तदर्थे ' यदि विधिः प्रतिकूलतया स्थितः ' इति पाठ्यम् ।

पञ्चषष्टितमे श्लोके च ' किमनया तव जीवितकन्यया ' इत्यत्र कन्यया जीवितया सत्या किं प्रयोजनमित्यर्थो विवक्षितः । अत्राप्युद्देश्यविधेयभाव एकेनैव पदेन दर्शितः । एतादृशस्थलेऽविमृष्टविधेयांशताख्यो दोषो भवति ' अनुवाद्य-मनुक्त्वैव न विधेयमुदीरयेत् ' इत्युक्तत्वात् कन्यारूपमनुवाद्यमनुक्त्वा जीवितयेति पूर्वमुक्तमिति वा समासे गुणीभूतत्वेन निर्देशो वा तत्र कारणम् ।

उपसंहृतं चरितनायिकायाश्चरितं सप्तदशे सर्गे परमदुःखमयमपि लोक-दृष्टया निजं गार्हस्थ्यं विवेकेन दुःखं पश्चादवस्थाप्य परमसुखमयमिव कृत्वा कृत्स्नं सम्यङ्निर्वर्त्य राजकीयं कार्यजातं यावच्छक्यं प्रजापालनं सम्यगनुष्ठाय चरमे वयसि कृतकृत्येवावाप्तावाप्तव्येव समाहितमानसा सती मृत्युमवेक्षमाणा तस्थौ । प्राप्ते च तस्मिन् सुखेन विहायेदं कलेवरं योगेनान्ते तनुत्यजां गतिं जगाम श्रीमती अहल्येतिसङ्क्षेपश्चरितस्यास्याः ।

मान्या वाचकप्रवराः सामान्यतो निरीक्षितं काव्यमिदं । नूनं महदुपकृतं विरचयता काव्यमिदं कविनानेनेत्येवोक्तिरलमेतस्मिन्विषये इति शम् ।

संस्कृतपाठशाला, इचलकरंजी
श्रावणसुदि २।१८५९

व्याकरणरत्न–लक्ष्मणशास्त्री
मुरगूडकरः ।



श्रीदेवी अहल्या।

# श्रीमदहल्याचरितम् ।

## प्रथमः सर्गः ।



श्रीगणेशाय नमः ॥ श्रीकुलदेवताभ्यो नमः ॥ श्रीमत्यै अहल्यायै नमः ॥

अहं श्रीगणेशं प्रशस्तांघ्रिशुण्डं समस्ताघहर्तारमस्ताचलाभम् ॥
त्रिलोकप्रसिद्धं ससिद्धैरमर्त्यैस्सदा वन्दितांघ्रिं परेशं नमामि ॥ १ ॥

सरोजवदनां रम्यां मनोज्ञां मनोरमाम् ॥
प्रणवाख्यस्वरूपां तां प्रणमामि सरस्वतीम् ॥ २ ॥

याश्च कल्पद्रुमायन्ते भक्तकामप्रपूरणे ॥
प्रणमामि प्रतिदिनं लक्ष्म्यादिकुलदेवताः ॥ ३ ॥

सतीकदम्बवन्द्यायाः श्रीमत्याः कुलयोपितः ॥
जगन्मातुरहल्यायाश्चरितं वर्णयाम्यहम् ॥ ४ ॥

यथैव संपादितसाधनानि मदीयबुद्धिं प्रविकाशयेयुः ॥
तथैव तस्याश्चरितं मनोज्ञं संरञ्जयेद्धाचकमानसानि ॥ ५ ॥

मदीयं धार्ष्ट्यमतुलं विलोक्य कवयोऽन्ततः ॥
करोतु बाल इति मे आशिषो दधुरेव ते ॥ ६ ॥

१. अहल्या नाम सुविख्याता पुण्यशीला होळकरोपाह्वमल्लारिरायस्य स्नुषा मालवविभागस्थइन्दूरसंस्थानाधिष्ठात्री । २.कविः । ३.मननशीलमतिः । ४. कल्पद्रुमवदाचरन्ति । ५. समूहः । ६. उपजातिवृत्तम् ।

शिष्य उवाच—

सद्गुरोऽधीतसच्छिष्यबुद्धिकोशविवर्धन ॥
मह्यं श्रीमदहल्यायाश्चरितं साधु वर्णय ॥ ७ ॥

विषयेषु विरक्ता च भक्ता विष्णोर्हरस्य च ॥
तस्माज्जगत्त्रये मान्या नान्याऽसीत्किल यत्समा ॥८॥

तपस्विनां शर्मदा च सेवमाना च नर्मदाम् ॥
शर्मदात्री च दीनानां कर्ममार्गजुषामपि ॥ ९ ॥

तस्मात्तदीयं चरितं सारं संगृह्य वर्ण्यताम् ॥
मानसं विषयासक्तं यतः पूतं भवेन्मम ॥ १० ॥

गुरुरुवाच—

महतां चरितं सर्वं वर्ण्यं ग्राह्यं यतः शुचि ॥
यथामति ततस्तुभ्यं कथयामि शृणुष्व तत् ॥ ११ ॥

महान्तोऽवतरन्त्यस्यां जगत्यां यन्मुहुर्मुहुः ॥
जगतः शिक्षणस्यार्थे नान्यो हेतुरतः परः ॥ १२ ॥

भो शिष्य ! मूलपुरुषः श्रीमान् खण्डूजिनामकः ॥
गंगा जिजू तस्य भार्ये नद्याविव सितासिते[1] ॥ १३ ॥

तत्पुत्र आसीन्मल्लारिर्गौतमायाः पतिः प्रभुः ॥
इतरा अपि भोगिन्यो बह्व्यस्तस्य स्त्रियोऽभवन् ॥१४॥

धर्मसंस्थापने दक्षो रामो दाशरथिः परः ॥
जामदग्न्यः परो योद्धा बलिष्ठो भीमसेनवत् ॥ १५ ॥

धैर्यशाली महाशूरः पंतामात्यातिवल्लभः[2] ॥
यवनान् हरिणान् दृष्ट्वा केसरीव जगर्ज यः ॥१६॥

१. गङ्गायमुने । २. बाजीरायस्यातिप्रियः ।

खण्डेरावः सुतस्तस्य श्रीमानिनकुलाग्रणीः ॥
यस्य भार्या किलाहल्या पूज्या चासीत्पतिव्रता ॥१७॥

जन्मकालं प्रवक्ष्यामि तस्या बाल्ये च शिक्षणम् ॥
यतः सर्वेषु लोकेषु विश्रुता प्रबभूव या ॥ १८ ॥

औरंगाबादभागे बीडनाम्न्यधिकारिणाम् ॥
स्थले चौंडाभिधग्रामे सज्जनैरभिमण्डिते ॥ १९ ॥

पट्टकील इति ख्यातः श्रीमान् माणवकप्रियः ॥
माणकोजी नामकोऽभूत्तेजस्वीव दिवाकरः ॥ २० ॥

तस्य भार्या महासाध्वी पतिसेवापरायणा ॥
अपरा द्रौपदीवाऽसीत् शङ्करस्येव पार्वती ॥ २१ ॥

विद्युल्लेखेव मेघस्य विधोः कान्तिरिवापरा ॥
रूपेण वा गुणेनासीन्मदनस्याथवा रतिः ॥ २२ ॥

सद्गुणानां खनिरसौ मुक्तानां शुक्तिकाऽथवा ॥
आसीच्छ्रीमदहल्याया उत्पत्तेः स्थानमद्भुतम् ॥२३॥

प्रथमं द्वौ सुतौ तस्या जातौ कुशलवाविव ॥
सुशीलौ कुलविख्यातिकारिणौ दैन्यहारिणौ ॥ २४ ॥

ततः परमये शिष्य! कन्यैका समजायत ॥
खानदेशे प्रदत्तासीद्विख्याते श्रीमतां कुले ॥ २५ ॥

अपत्यत्रितयेनैतौ पितरौ सौख्यमापतुः ॥
दयाविनययत्नैश्च शान्तिबोधाविवानिशम् ॥ २६ ॥

१. जिल्हासंज्ञके । २. तालुकाभिधाने । ३. पाटील इति महाराष्ट्रभाषायां । ४ माणवकाः बालाः प्रियाः यस्य सः किंवा माणवकानां प्रियः

पुनरीशस्य कृपया दोहदं प्राप्य गर्भिणी ॥
आसीच्छ्रीराममातेव लोककल्याणकारिणी ॥ २७ ॥

शुश्रूषमाणा नित्यं सा कथाः पौराणिकीः शुभाः ॥
धनधान्यादि दित्सन्ती चिकीर्षन्ती च मङ्गलम् ॥२८॥

ततः कतिपयाहोभिर्वचोभिरभिरन्दिनी ॥
चूचुके च नितम्बे च कार्ष्ण्यं स्थौल्यं च सावहत् ॥२९॥

विषयेष्वतिनिर्विण्णा प्रियवेदान्तलक्षणा ॥
वक्तुं च राजनीतिं सा प्रावर्तत विचक्षणा ॥ ३० ॥

ततः—श्रीशालिवाहनशके गिर्यब्धिरसभूमिते ॥
कल्पिते ज्येष्ठवद्ये च सप्तम्यामरुणोदये ॥ ३१ ॥

लग्ने बुधे रवौ शुक्रे, तुर्ये चन्द्रे, शनौ सुते, ॥
सप्तमे दशमे भौमे गुरौ भाग्ये सकेतुके ॥ ३२॥

अस्मिन्ननुमिते काले माणकोजीवधूः शुभा ॥
कन्यां प्रासूत रुचिरां सुद्योरिन्दुकलामिव ॥ ३३ ॥

ववृधे तस्य सदने बालिका सा शनैः शनैः ॥
मुक्ता शुक्तौ समुद्रे वा शान्तिर्वा योगिनो हृदि ॥३४॥

द्वादशाहे शुभे तस्या जननी मुदितानना ॥
सवासिनीभिस्तन्नाम संस्कारमकरोच्छुभम ॥ ३५ ॥

१. आप्रथमगर्भसंभवात्कार्ष्ण्यं सा स्थौल्यमेवाधुना पुनरवहत्। २. १६४७ तमस्य शाकसंवत्सरस्य ज्येष्ठवदि सप्तम्यां। ३. भाविनश्चारित्र्यादनुमिते। ४. सप्तमे भौमे दशमे गुरौ इत्यन्वयः। ५. आकाशः।



पैतृकी वृत्तिरेतेषां हल्याऽसीन्मेषपालिका ॥
त्यक्त्वा नूनमहल्येयं भविता राष्ट्रपालिका ॥ ३६ ॥

या गौतमस्य प्रियधर्मपत्नी रामावतारे समभूदहल्या ॥
नूनं निजं वर्धयितुं यशः सा कलौ युगे धर्मपरा बभूव ॥ ३७ ॥

सतीषु ताराप्रमुखासु पूर्वं श्रेणीमहल्या प्रथमामवाप ॥
यथा तथाऽस्मिन् समयेऽप्यहल्या श्रेष्ठैव तत्कालसतीष्वभूत्सा ॥ ३८ ॥

क्रीडन्त्यान्दोलनेऽहल्या क्वचिद्धसति रोदिति ॥
प्रसङ्गान्भाविराज्यस्य स्वयं तत्रान्वभूदिव ॥ ३९ ॥

प्रकुर्वती करे यष्टिं चालयन्ती सुमण्डलम् ॥
प्रक्षिपन्तीव वेगेन वहन्ती मुदमाबभौ ॥ ४० ॥

आक्रोशन्ती क्षणं क्रोधाच्चिन्तयन्तीव केवलम् ॥
प्रजारक्षणचातुर्यं दर्शयन्त्यभवद्ध्रुवम् ॥ ४१ ॥

क्वचित्समाहितमनाः कुर्वन्ती देवचिन्तनम् ॥
दत्त्वा हस्तगतं वस्तु स्वास्मितमत्यभवत्क्षणम् ॥ ४२ ॥

पश्यां ततो रिङ्खयन्ती वश्यां पृथ्वीं वितन्वती ॥
एवं प्रकारकान्भावान् दर्शयन्ती मुहुर्मुहुः ॥ ४३ ॥

ततो बाल्ये शुभाचारा सुविचारा मनीषिणी ॥
लेखने वाचने साऽसीद्बालिकाग्रविनेपिणी ॥ ४४ ॥

बोद्धुं मूर्तिमती विद्या वक्तुं वागीश्वरी तथा ॥
मेधाविनी कलास्वासीद्राजधर्मोक्तिष्वपि ॥ ४५ ॥

१. एतेषां पितृपरंपरया आगतां हल्यजन्यां मेषपालिकां वृत्तिं त्यक्त्वा तदन्यां राष्ट्रपालिकां वृत्तिं स्वीकरिष्यतीति तदस्याः नाम अहल्या इति कृतमस्याशयः । २. अहल्याद्रौपद्यादिपञ्चके । ३. शोभनं स्थलम् । ४. रिङ्गिधातोः स्वार्थे णिजन्तस्येदं रूपम् ।

पुराणवाचने दक्षा तदिङ्गितविचारणे ॥
महाभारततत्त्वं च पालयन्त्यास सर्वदा ॥ ४६ ॥

सात्त्विकज्ञानसंयुक्ता सात्त्विकाहारकारिणी ॥
सत्त्व[1]संरक्षणं सत्त्वमात्मनो[2]ऽमन्यतैव सा ॥ ४७ ॥

बाल्येऽपि या क्रीडनकेऽपि सत्यं स्वसंस्कृतिं सन्नमनं च धैर्यम् ॥
प्रतिक्षणं वै प्रकटीचकार तेजस्वितेजो न कदापि हीनम् ॥ ४८ ॥

बाल्येऽपि भक्त्या परया गिरीशं संपूजयन्ती प्रतिवासरं सा ॥
पितुर्गृहेऽपि श्रवणं चकार मोदेन पौराणिकसत्कथानाम् ॥ ४९ ॥

विना शिवं न क्षणमुद्वहन्ती शिवाभिधानं मुखतः पठन्ती ॥
सदाशिवस्यैव कृपाप्रसादाच्छिवं भवेन्मे सकलं जगत्याम् ॥ ५० ॥

गृहेष्वसावन्वहमागतानां पाठानशिक्षत्किल सद्गुरूणाम् ॥
सद्यो यथास्वं किमशक्यमाप्तुं लोके भृशं बुद्धिमतां जनानाम् ॥५१॥

आसीच्च या क्रीडनकारिणीभिर्गृहागताभिः सहचारिणीभिः ॥
किं शिक्षयन्ती सहवर्तमाना धैर्यादिकानात्मनि वर्तमानान् ॥ ५२ ॥

या शिष्यिका पूर्वमभूद्गुरूणां सा शिक्षयित्री क्षणतो बभूव ॥
एवं तदा सा स्वमतिप्रकाशात्प्रकाशयित्रीव सखीजनानाम् ॥ ५३ ॥

रङ्गवल्यादिकानां च कलानां कलनेन या ॥
कलावती प्रसिद्धाऽसीद्विगीता[3]चरणं विना ॥ ५४ ॥

वयस्यल्पेऽपि महतां गुणानामाश्रयो ह्यसौ ॥
आसीत्तस्मान्न गुणिषु वयो लिङ्गं नवेर्तरत् ॥ ५५ ॥

गृण्हन्ती प्रत्यहं नूनं शिक्षकाद्वर्णशिक्षणम् ॥
आसीच्छिक्षयितुं सर्ववर्णान् राष्ट्रे निजे स्वयम् ॥ ५६ ॥

१. सत्त्वानां जीवानां रक्षणं । २. आत्मनः कायमित्यर्थः । ३. निन्दिताचार । ४. गुणिषु वयस्तदितरद्वा चिह्नं न किन्तु गुणा एव चिह्नम् । ५. ब्राह्मणक्षत्रियादीन् ।

ददात्यात्मगुणान् लोके गृह्णात्यन्यगुणान् स्वयम् ॥
एवं व्यवहरन्त्यन्यान्स्वकौशलमशिक्षयत् ॥ ५७ ॥

या सखीषु च सर्वासु नायिकेवान्ववर्तत ॥
ताश्च सर्वा इमां राज्ञीममन्यन्तेव खेलने ॥ ५८ ॥

सदा तदाज्ञां मन्वानास्तत्कृतिं चान्वकुर्वत ॥
यस्मादस्मासु कुशलानेनादक्षत्यमन्वत ॥ ५९ ॥

स्वयं क्रीडनकानश्वानारोहन्ती च निर्भयम ॥
तथैवारोहयन्त्यन्याः किमभूस्सैन्यशिक्षिका ॥ ६० ॥

एताभिः स्वसखीभिश्च समन्त्याकल्पित रणे ॥
अन्यप्रदेशे राष्ट्रे वा प्रधावन्त्यभियाति च ॥ ६१ ॥

तादृशीं चतुरां कन्यां चतुराननिर्मिताम ॥
सर्वासां तत्सखीनां च कौशल्येनाग्रगामिनीम ॥ ६२ ॥

क्रीडन्तीं स्वसखीभिस्तां माणकोजी पिता तदा ॥
विलोक्याचिन्तयत्किंवा कर्तव्यमधुना मया ॥ ६३ ॥

अकिञ्चनोऽहं परमं कन्येयं दैवशालिनी ॥
नूनं योगो भवेदस्या धनिकेन नृपेण वा ॥ ६४ ॥

निःस्वां कथं परिणयेच्छ्रीमान् विद्वान्नृपोऽथवा ॥
समानशीलयोर्योगो भवेद्वैवाहिको ध्रुवम ॥ ६५ ॥

ततो माल्वदेशानामधिपः कुलशीलवान् ॥
मल्लारिनामा विख्यात आसीद् द्रविणवानपि ॥ ६६ ॥

कर्णाकर्णिकया सोऽपि श्रुतवानस्य सत्कुलम् ॥
प्रसिद्धं परमं दीनं परं विख्यातवंशजम ॥ ६७ ॥

१. विनिमयं कुर्वन्नीत्यर्थः ।

**तदेवाह—** माणकोजी पट्टकीलः शिंदे इत्युपनामकः ॥
शुद्धो धनागारजातिः कुलीनो दुर्गतोऽभवत् ॥ ६८ ॥

तस्य कन्या ध्रुवं मान्या वन्यागारविहारिणी ॥
अनन्यादृग्जनन्यस्याः शुक्तिर्मुक्तेरिवाबभौ ॥ ६९ ॥

अहल्याख्या बुद्धिमती साक्षाद्धर्मवती परा ॥
दानकाले च कर्णादीन् न्हेपयन्तीव या सदा ॥ ७० ॥

व्यवस्थितौ तथा न्याये दर्शयन्ती स्वकौशलम् ॥
सदाचारेण तिष्ठन्ती साध्वीर्वासं प्रकुर्वती ॥ ७१ ॥

सदानन्देन तिष्ठन्ती पूजयन्ती सदाशिवम् ॥
एवंगुणेति मल्लारिर्भूपतिश्चाशृणोत्स्वयम् ॥ ७२ ॥

स्वयं सुनिश्चितमतिर्गृहीतस्त्र्याप्तसंमतिः ॥
निश्चिकाय स्वपुत्रस्य विवाहार्थं सतां सतीम् ॥ ७३ ॥

बाल्यादारभ्य यासीत्सकलगुणखनिः प्रीतिपात्रं च पित्रो—
र्गेहे नित्यं रमायाः सदनमिति मुदा वर्तनाद्दर्शयन्ती ॥
भूमौ राज्ञां कुलेषु प्रथिततरयशश्चन्द्रमस्सु स्वयं या
श्रैष्ठ्यं प्राप्ता तदात्वस्थितविमलसतीष्वग्रगण्या च शिष्य ॥७४॥

**इति श्रीमद्भावतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते श्रीमदहल्याचरिते तस्या जन्मबाल्यवर्णनं नाम प्रथमः सर्गः ।**

१. धनगर इति महाराष्ट्रभाषायाम् ।

# द्वितीयः सर्गः ।



**शिष्य उवाच—**

श्रीमद्गुरो सूरिवर्य ज्ञाताशेषकथानक ॥
रसभावविभावज्ञ शिष्येच्छापरिपूरक ॥ १ ॥

अग्रे श्रीमदहल्याया विवाहचरितं शुभम् ॥
श्रोतुमिच्छामि नूनं ते मुखाम्भोजात्सविस्तरम् ॥ २ ॥

**गुरुरुवाच—**

इदानीं पुण्यकारिण्या अहल्यायाश्च शिष्य ते ॥
विवाहं वर्णयिष्यामि सावधानतया शृणु ॥ ३ ॥

ततो मल्लारिरायस्य गौतमी नाम पत्न्यभूत् ॥
उभौ गुणान्वितौ शीलवन्तौ येसूशिवाविव ॥ ४ ॥

स्वराष्ट्रे वर्तमानानां प्रजानां पितराविव ॥
पालनं चक्रतुः प्रेम्णा लक्ष्मीनारायणाविव ॥ ५ ॥

बहुकालं तयोः पुत्रप्राप्तिर्नाभूत्ततोऽन्वहम् ॥
सुपुत्रविषये चिन्तां परमां चक्रतुश्च तौ ॥ ६ ॥

उदासीताभिधाने द्वे कन्ये जाते तयोः परम ॥
आत्मपुत्रमुखं द्रष्टुमास्तां तौ परमुत्सुकौ ॥ ७ ॥

१. शृंगारादया नवरसाः, भावाः सात्त्विकादयः, आलम्बनोद्दीपनविभावाश्च ।
२. पुण्यकारिण्या इति विशेषणदानेन भावि सर्वमहल्याचरितं गुणैः स्मृतिपथे समागतमिति व्यज्यते । ३. येसू—शम्भुरायस्य ( संभाजी ) पत्नी । शिवः—शम्भुः, सम्भाजीनामकः शिवरायस्य पुत्रः ।

[1]मल्लारिकृपया राज्ञी गौतमी पुत्रमन्वभूत् ॥
[2]इषशुद्धदशम्यां च विजयायां जयं यथा ॥ ८ ॥

श्रीशालिवाहनशके षोडशे[3] शतके तथा ॥
पंञ्चचत्वारिंशकेऽब्दे मल्लारिः पुत्रवानभूत् ॥ ९ ॥

शनैः शनैस्तत्तनयस्तदानन्द इवान्वहम् ॥
ववृधे बालभावेन पितरौ समरञ्जयत् ॥ १० ॥

खण्डोबाभक्तमल्हारेः खण्डोजीनामकः सुतः ॥
अखण्डसुखदो बाल्येऽप्यनेकैः क्रीडनैरभूत् ॥ ११ ॥

बाल्ये हासप्रियः पुत्रः कौमारे क्रीडनप्रियः ॥
लेखप्रियश्च पौगण्डे ततोऽभूद्योधनप्रियः ॥ १२ ॥

शूरैर्भटसुतैर्मान्यः पौगण्डे विपिनेषु यः ॥
मृगयायां व्याघ्रसिंहान्हन्तुं निर्भयमानसः ॥ १३ ॥

पित्रा समं योधकृपाणधारी मात्रा समं भक्षणवस्तुधारी ॥
बालैः समं क्रीडनवस्तुहारी बभूव गेहे तनयो विहारी ॥ १४ ॥

दीने दयालुः शत्रूणां प्राणेषु ददृशे यमः ॥
साधुः समवयस्केषु स्त्रीष्वासीन्मदनोपमः ॥ १५ ॥

दशवर्षवया आसीत्खण्डेरावो महामनाः ॥
तदा परिणयं तस्य कर्तुं निश्चितवान्नृपः ॥ १६ ॥

माणकोजीनामकस्य सुशीलस्य सुता प्रिया ॥
आसीदहल्यानामेति पुत्रार्थं वाञ्छति स्म ताम् ॥ १७ ॥

तस्मादहल्यापितरं स्वगेहे श्रीमाणकोजीत्यभिधानवन्तम् ॥
आकारयामास नृपो विवाहे खण्डूजिनं दर्शयितुं स्वपुत्रम् ॥ १८ ॥

१. खंडोबा पक्षे मल्हारराय:। २. आश्विनसुदिदशम्यां। ३. १६४५ तमे वत्सरे।

कुलप्रसिद्धं वयसा युवानं रूपेण नूनं जितमन्मथं तम् ॥
खण्डूजिनामानमतीव शूरं जामातरं निश्चितवान् स्वपुत्र्यै ॥ १९ ॥

हीरकेण च मुक्तायाः सान्निध्यं स्यात्सुवर्णतः ॥
अतोऽर्थयत् स मल्लारिं माणकोजी वधूपिता ॥ २० ॥

अष्टवर्षाऽभवत्कन्या दशवर्षोऽभवद्वरः ॥
निरन्तरमिवाऽऽसीत्तद्वत्सरद्वयमन्तरम् ॥ २१ ॥

श्रीशालिवाहनशके पञ्चषष्ट्युत्तरे शुभे ॥
षोडशे शतके शुद्धे वैशाखे शोभने मते ॥ २२ ॥

सुमुहूर्ते दोषशून्ये सुलग्ने स्विष्टवर्गके ॥
मल्लारिः कारयामास सूनोः परिणयं पिता ॥ २३ ॥

शुशुभाते रोहिणीन्दू इव तत्र वधूवरौ ॥
किंवा लक्ष्मीकेशवौ तौ गिरिजाचन्द्रशेखरौ ॥ २४ ॥

खण्डेरावो वरः सिन्धुरहल्या जाह्नवी मता ॥
खण्डेरावः सुरपतिरहल्या वा शची स्वयम् ॥ २५ ॥

खण्डेरावश्च संभाजी भूमौ पुनरवातरत ॥
अहल्या च तथा येसू नाम्नी नूनं पतिव्रता ॥ २६ ॥

किमु लक्ष्मीवरो लक्ष्म्या अहल्यायाः प्रियो नृपः ॥
करावलम्बं कृतवान् सर्वसंसारसौख्यदम् ॥ २७ ॥

वाङ्निश्चयो देवकसंप्रतिष्ठा गौरीहरार्चा शुचितैलवर्त्म ॥
मधूपहारो मधुपर्कपूजोद्वाहस्तथा मङ्गलसूत्रबन्धः ॥ २८ ॥

१. स माणकोजी इति शेषः। २. अयाचत। ३. १६५६ तम वत्सरे।

विजेतुं सकलान् योधान् निर्भयः समराङ्गणे ॥
समर्थतां दर्शयितुं किमभूच्छस्त्रधारकः ॥ २९ ॥

सर्वताम्बूलसाहित्यपेशीं कक्षे वहन्नसौ ॥
दर्शयामास मुखतः सैन्यं किं रञ्जयाम्यहम् ॥ ३० ॥

होमस्तथा सप्तपदीविधानं स्नुषामुखालोकगृहप्रवेशौ ॥
यथाक्रमं सर्वमलं सभार्यो यथाकुलाचारमसौ चकार ॥ ३१ ॥

मल्लारिराजोऽपि स गौतमीको वैवाहिकेनाथ महोत्सवेन ॥
अवाप मोदं स्नुषया गुणिन्या सुलक्षणैः शोभितया स्वगेहे ॥ ३२ ॥

रङ्गक्रीडा वीटिकानां प्रदानं स्यादुन्मोको हस्तपूगीफलस्य ॥
नामग्राहं सर्वसीमन्तिनीभिः साकं सोऽभूदुत्सवो मण्डपे स्वे ॥ ३३ ॥

वधूवरौ तौ करबद्धकङ्कणौ सदेकपात्रे कृतभोजनोत्सवौ ॥
परस्परं तौ सुगृहीतनामकौ अक्रीडतां प्रीतियुतौ वधूगृहे ॥ ३४ ॥

स्नुषया श्वशुरो मुदान्वितः सुवरेणाथ तथा वधूपिता ॥
विधुना च यथा सुकौमुदी कुमुदिन्या शुशुभे यथा विधुः ॥ ३५ ॥

वरो यथा सप्तपदीविधानं करोति यन्नव्यवधूकरग्रहम् ॥
संसारसिन्धोस्तरणे सहायस्त्वमेव मुख्येति निवेदनाय ॥ ३६ ॥

खण्डोजी सप्तपद्यां यदहल्यायाः करग्रहम् ॥
अकरोद्धाविराज्यस्य करग्रहनिदर्शनम् ॥ ३७ ॥

वरो मन्त्रेण यद्वध्वाः करे बध्नाति कङ्कणम् ॥
आत्मनः किमु संसारभारवाहनलक्षणम् ॥ ३८ ॥

१. बटवा इति महाराष्ट्रभाषायां । २. अलंचकार—पूर्णं चकार । ३. राजग्राह्यं धनं—करः ।

वरो विवाहे च करोत्यवश्यं बध्वा गले मङ्गलसूत्रबन्धम् ॥
स्वभाविसंसारसुखं समग्रं त्वत्कण्ठतो मे ध्रुवमत्र दृश्यम् ॥ ३९ ॥

वरेण बध्यते कण्ठे वध्वा मङ्गलसूत्रकम् ॥
संसारे बध्यते तेन वरः स्वयमहो सदा ॥ ४० ॥

वैवाहिकं कर्म सुवासिनीभिः प्रवर्त्यते यत्सकलं विधातुम् ॥
वधूवराभ्यां च मिथः प्रगृह्य सुभूषितं नाम तदा प्रमोदात् ॥ ४१ ॥

संसारे सर्वदाहल्या वृत्तिर्मे हितकारिणी ॥
भूयादिति कुलस्वामिचरणौ प्रार्थयाम्यहम् ॥ ४२ ॥

अखण्डसंसारसुखं प्रदातुं खण्डोजिपादावसकृद्भवताम् ॥
इतीव हेतोर्विनयेन मूर्ध्ना सदाहमम्बाचरणौ नमामि ॥ ४३ ॥

अक्षतारोपणं शीर्षे मिथो यच्च वधूवरौ ॥
चक्रतुः किमु संसारे न क्षतारोपणं भवेत् ॥ ४४ ॥

क्षतं शरीरेषु कदापि माभूद्योधने राजकुलस्य नूनम् ॥
इत्यक्षतारोपणमत्र विप्राः कुर्वन्ति मन्त्रैः शुभकारकैश्च ॥ ४५ ॥

खण्डोजिराजो धृतचारुवेषोऽहल्यापि सा चारुगृहीतवेषा ॥
उभौ समोदं स्वगृहं प्रविष्टौ मामाधवावेव जनैः प्रदृष्टौ ॥ ४६ ॥

स्नुषया परया लक्ष्म्या मुदितः श्वशुरोऽभवत् ॥
लक्ष्मीवतः परांश्चक्रे सकलान् पारितोषिकैः ॥ ४७ ॥

**अज्ञानहरणे** दक्षा **कल्याणपरमा मता** ॥
राष्ट्रेऽस्माकं सर्वदास्तामिति लोकैरमन्यत ॥ ४८ ॥

१. लक्ष्मीनारायणसदृशौ । २. कर्मगुप्तमेतत्पद्यं अहल्यामाता इति कर्मपदमेतत् मतेत्यत्रान्वेति.

तावेकजीवावपि भिन्नदेहौ वधूवरौ निर्मलमानसौ च ॥
मल्लारिराजस्य गृहे सदास्तां घटे कलश्यां पय एकमेव ॥ ४९ ॥

परस्परं मञ्जुलभाषणौ तौ परस्परं क्रीडनकारिणौ तौ ॥
परस्परं भावविभावनायामादर्शरूपौ सदने सदास्ताम् ॥ ५० ॥

शौर्यकर्मकरणे यथा सुतो युक्तिकौशलकृतौ तथा स्नुषा ॥
राष्ट्रपालनविधावुभावपि सम्मतावभवतां महीपतेः ॥ ५१ ॥

खण्डूजिरायोऽमितशौर्यकारी क्वचित्क्वचित्स्याद्विषयाभिलाषी ॥
सन्त्यज्य यं पूजयति स्म भार्या नान्यं कदाचित्कृतनित्यकृत्या ॥ ५२ ॥

स्नुषया परया सुशोभया परमानन्दितचित्तयानया ॥
अतिमोदमवाप गौतमी ह्युपमा चन्द्रिकया सरोजिनी ॥ ५३ ॥

मल्लारिराजः स्वगृहे मेने लक्ष्मीमिव स्नुषाम् ॥
आत्मनः सर्वसंसारसाधने हितकारिणीम् ॥ ५४ ॥

गृहकर्मणि निष्णातां सदावहितमानसाम् ॥
स्नुषां विलोक्य सा श्वश्रूर्मेने धन्यत्वमात्मनः ॥ ५५ ॥

स्नुषां मल्लारिरायस्य ज्ञात्वाहल्यां सुलक्षणाम् ॥
ज्ञातारो मेनिरे भाविराष्ट्रसंरक्षणक्षमाम् ॥ ५६ ॥

पुरवासिजनाः सर्वे दृष्ट्वाहल्यां च सौधगाम् ॥
अवतीर्णां मूर्तिमतीं राजलक्ष्मीममंसत ॥ ५७ ॥

अवरोधस्तथाहल्यां दयार्द्रहृदयां सतीम् ॥
विलोक्य मुदितश्चासीत्सर्वथाधारमात्मनः ॥ ५८ ॥

१. मल्लारिरायस्य । २. सावधानं मानसं यस्यास्ताम् ।

ज्ञातयो वनिता वृद्धाः प्रहृष्टवदनाम्बुजाम् ॥
दृष्ट्वाहल्यां गौतमाया विश्रान्तिस्थानमुज्जगुः ॥ ५९ ॥

गेहस्थाः परिचारिण्यस्तथा च परिचारकाः ॥
अन्नदात्रीं किलास्माकं सर्वदैवं बभाषिरे ॥ ६० ॥

सामुद्रिकैर्लक्षणैस्तां दैवज्ञा अवलोक्य च ॥
लोके महाभाग्ययुतां राज्ञे सानन्दमूचिरे ॥ ६१ ॥

अलौकिकज्ञानयुक्ता योगिनः शान्तचेतसः ॥
ऊचुर्धर्मवतीं कीर्तिमतीं दानादिभिश्च ताम् ॥ ६२ ॥

कलावन्तो याचकाश्च जगतीतलवर्तिनः ॥
कल्पवल्लीमिमामुर्व्याममन्यन्त मुदान्विताः ॥ ६३ ॥

चारणा बन्दिनश्चापि नटनर्तकगायकाः ॥
इमां कलासु निपुणां विदुषीमन्वमंसत ॥ ६४ ॥

खण्डूजिरायः परमां सतीं तां भार्यामहल्यां मृदुभाषमाणाम् ॥
सेवां सदा स्वस्य समादधानामालोच्य चित्तेऽतिशयं तुतोष ॥ ६५ ॥

इङ्गितस्य परिज्ञाने योगिनीव परा सदा ॥
सावधानमतिश्चासीत्पत्युः सकलकर्मसु ॥ ६६ ॥

एवंविधेषु बहुलेषु गुणेषु लोके विद्वज्जनैरभिमतेषु मनोरमेषु ॥
का नाम सङ्ग्रहवतीति विवादकालेऽहल्यैव सर्वगुणराशिरहो न मिथ्या॥६७॥

मल्लारिराजसदने वयसा कनीयान्। जीवोऽयमेव विविधेषु जनेषु सत्सु॥
मान्यैर्गुणैश्च विविधैश्च तथा महीयान्। जीवोऽयमेव खलु शिष्य! सतीष्वहल्या
॥ ६८ ॥

इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते
श्रीमदहल्याचरिते तद्विवाहोत्सववर्णनं नाम द्वितीयः सर्गः।

# तृतीयः सर्गः ।

शिष्य उवाच—

श्रीसद्गुरो ज्ञाननिधे धरात्मन्ननादिसंसारतरोः कुठार ॥
मां प्रत्यहल्याचरितं पुरस्तात्संकथ्यतां कर्णरसायनं तत् ॥ १ ॥

श्रीगुरुरुवाच—

अथाङ्गनानां परमद्वितीया मल्लारिरायस्य वधूरहल्या ॥
सर्वांवयस्या अतिवर्त्य नूनमेषैव राज्ञः परमप्रियाऽभूत् ॥ २ ॥
सदा सदाचारपरस्वभावां स्वभर्तुरावश्यककार्यकर्त्रीम् ॥
कदाचिदध्यात्मविचारचित्तां विलोक्य राजा सुतरां तुतोष ॥ ३ ॥
अल्पं वयः क्व क्व सुशीलतेयं मितं वचः सार्थकमल्पशब्दम् ॥
परं मनोहार्युपदेशकारि श्रुत्वा च साश्चर्यमना अभूत्सः ॥ ४ ॥
निरालसत्वं मधुभाषणत्वं सोत्साहवृत्तिर्नवसंजिघृक्षा ॥
विनम्रभावश्च सकौतुकत्वं गृहागते सादरवृत्तिरस्याः ॥ ५ ॥
वेदान्तशास्त्राभिरुचिः पुराणश्रुतिश्च शास्त्रार्थविचारणा वा ॥
आन्वीक्षिकीशास्त्रविशेषचर्चा कृत्यं यथाकालमशेषमस्याः ॥ ६ ॥
एतादृशानेकगुणान् विलोक्य स्वस्य स्नुषायां परमादरेण ॥
अपेक्ष्य खण्डूजिसुतं नृपस्तामसन्यताऽस्मत्कुलरक्षणाय ॥ ७ ॥
खण्डूजिरायोऽपि समानशीलान् क्रीडद्वयस्यानधिमन्यमानः ॥
आसीद्विहारी जनतार्तिहारी पराक्रमेणाखिलनिर्जितारिः ॥ ८ ॥
संभाजिपुत्रेण शिवाजिरायो मल्हारिराजोऽपि तथात्मजेन ॥
आसीत्सदा योधनकर्तृवर्योऽनपेक्ष्य जीवं परमप्रियं च ॥ ९ ॥

अभूत्सदा योधनकार्यकारी शत्रून्विहन्तुं कटिखड्गधारी ॥
इतस्ततः प्रान्तनिवासकारी पित्रोः कृपाच्छत्रतले विहारी ॥१०॥

पित्राज्ञयाऽसौ युधि हिण्डमानः पराक्रमात्खण्डितशत्रुमानः ॥
विनैव चिन्तां कुरुते स्म कार्यं यन्त्रं यथा चालकचालितं यः ॥११॥

पित्राज्ञयाऽसौ निजराजधानीं संरक्षितुं राज्यमिदं स्वकीयम् ॥
सुखेन साकं तरुणैः सुपुत्रोऽध्यतिष्ठदेनामिव सिंहशावः ॥ १२ ॥

आज्ञां प्रमाणं पितुरेव नित्यं मन्वान आसीत्पितृभक्तियुक्तः ॥
आज्ञानुवर्तित्वमिदं जगत्यां पित्रोश्च मुख्यस्तनयस्य धर्मः ॥ १३ ॥

मधुप्रपीतः परितश्च गुञ्जन् नदद्द्विरेफश्च सरोजिनीं वा ॥
स तामहल्यां रमणीं प्रति स्वां खण्डूजिरायश्चकमे विहृत्यै ॥ १४ ॥

सा तं मनोजोद्भवतीव्रतापनिवारणायैव लतेव वृक्षम् ॥
खण्डूजिरायं स्वपतिं युवानमनङ्गभासं रमयाम्बभूव ॥ १५ ॥

आलेख्यरूपैः परिचित्रिताङ्गे रङ्गैरनेकै रुचिरान्तराङ्गे ॥
मल्लारिरायस्य नवीनसौधे तस्थौ यथेच्छं स नरेन्द्रपुत्रः ॥ १६ ॥

अनेकसिंहासननिष्ठजिष्णौ विराजितानेकधनाधिपे च ॥
सौधे तथाऽनेकवसुप्रयुक्ते स्वर्गाधिकेऽवर्तत भूपसूनुः ॥ १७ ॥

अधिष्ठितानेकसुपर्णवाहे विभ्राजितानेककवौ वरेण्ये ॥
विराजितानेककलानिधौ च स्वर्गातिशायिन्यपि रञ्जिताङ्गे ॥१८॥

१. खण्डितः विनाशितः शत्रूणां मानः—अभिमानः येन सः। २. अयं सौधः स्वर्गादप्यधिकरमणीयः, यतः स्वर्गे एक एव जिष्णुरिन्द्रः; अत्र अनेके जिष्णवः—जयशीलाः तथा धनाधिपः कुबेरः श्रीमन्तश्च; वसवः—अष्टौ वसवः, रत्नादिधनञ्चेति। ३. सुपर्णवाहः—विष्णुः; तमाखुभक्षकः, कविः—शुक्रः; काव्यकर्ता पण्डितो वा। कलानिधिश्चन्द्रः; रङ्गवल्ल्यादिकलावन्तश्च तत्र चैक अत्र बहव इति अतिशायित्वमस्य सौधस्य स्वर्गापेक्षयेत्यर्थः।

किं चन्द्रमास्तत्र च राजसूनुः किं चन्द्रिका सा समभूदहल्या ॥
दिवाकरो वा किमु दीप्तिमान्स स्वयं प्रभा सा किमहो अहल्या ॥१९॥

सुधामये भास्वररश्मियुक्तेऽप्यनेकगन्धर्वविभूषिते च ॥
जायापती तैलसुवासिताङ्गौ विजन्हतुर्मण्डितसौधपृष्ठे ॥ २० ॥

शृङ्गारलीलोत्सवबद्धचित्तौ आस्तामुभौ यद्यपि भिन्नदेहौ ॥
अक्रीडतां तत्र किलावतीर्णौ रतिस्मरौ मानवदेहिनौ किम् ॥२१॥

अक्रीडतां शारिफलैरुभौ तौ गानं व्यधत्तां च मिथः कदाचित् ॥
आलिङ्गनं प्रेमरसार्द्रचित्तौ सँल्लापनं वा मधु मञ्जुलं च ॥ २२ ॥

खण्डूजिरायोऽपि विलासकाले भार्यावशोऽभूत्खलु राजपुत्रः ॥
उत्पत्तिकाले जगतः स्वतन्त्रो मायावशोऽभूत्परमेश्वरोऽपि ॥ २३ ॥

आसीत्कदाचिन्मधुपानमत्तः क्रीडन् कदाचिद्युवभिश्च युक्तः ॥
स्वकीयशुद्धाचरणेन तस्मान्निवर्तयामास पतिं सती सा ॥ २४ ॥

अन्नं विशुद्धं मधुरं ससत्त्वं युक्तं च पत्ये किल भोजनार्थम् ॥
समर्पयामास सती परीक्ष्य शुद्धं हि बीजं सुफलं व्यनक्ति ॥ २५ ॥

ततो चिरादेव च राजपुत्रादादत्त गर्भं जठरे सती सा ॥
दिवाकराद्व्योमनि मेघमाला मनोज्ञपर्जन्यमिवोष्मकाले ॥ २६ ॥

मल्लारिराजोऽप्यशृणोदहल्यां श्वश्रूस्स्नुषां गर्भवतीं स्वकीयां ॥
भवाम्बुधावत्र च मन्यते स्म मुक्तावतीमेव सुशुक्तिकां ताम् ॥२७॥

गर्भो यथाऽवर्धत राजगेहे स्नुषोदरे वर्धितदक्षभागे ॥
मल्लारिराजस्य च गौतमाया मूर्तः परो मोद इव द्वितीयः ॥ २८ ॥

१. वृद्धिंगतः दक्षः–दक्षिणः भागः यस्य, तस्मिन्। २. महान्।

अथ स्नुषायाः किल गर्भवत्याः पृथूदरं तच्छ्वशुरस्य गेहे ॥
अतीव शुद्धस्य भविष्यतः स्यात्तत्कीर्तिचन्द्रस्य निदर्शनं किम् ॥२९॥

स्नुषाऽप्यहल्या रजनी विभाति गर्भो हिमांशुर्गगनं च कुक्षिः ॥
मल्लारिरायस्य च शोभमानः सौधो महान् शारदशुद्धपक्षः ॥ ३० ॥

स्वातीघनो वाऽथ स राजपुत्रो भार्या सुशीला नवशुक्तिका वा ॥
गर्भस्तदा मौक्तिकनामकोऽभून्मल्लारिरायस्य गृहं समुद्रः ॥ ३१ ॥

गर्भो यथाऽवर्धत राजवध्वाः कुक्षौ महल्या अथ गौतमायाः ॥
चित्ते प्रहर्षः सदनेऽन्वहं तन्महोत्सवोऽनेकविधो वधूनाम् ॥ ३२ ॥

सुवासिनीभिश्च नवे दुकूले यत्नात्किलाभ्यफलप्रदानम् ॥
सकौतुकं तद्द्विविधप्रकारं चकार मल्लारिनरेन्द्रभार्या ॥ ३३ ॥

शिक्यस्थितायै प्रथमं बभार पूर्वाह्णकाले च तथा द्वितीयाम् ॥
सचन्द्रिकायां च तमिस्रगर्ले तस्यै तृतीयां च तथा तुरीयाम् ॥३४॥

आन्दोलने मण्डलमण्डितायै तथा सुरम्योपवनस्थितायै ॥
तां पंचमीं कौतुकयुक्तचित्ता श्वश्रूश्च षष्ठीं सुफलैर्बभार ॥ ३५ ॥

द्वारस्थितायै किल सप्तमीं सा तथाष्टमीं शोभितमण्डपायै ॥
तृतीयमासि रहसि स्थितायै षष्ठेऽष्टमे चाथसुवासिनीभिः ॥ ३६ ॥

एवं कृतानेकमहोत्सवा साऽहल्या सुनिर्वर्तितदोहदा सा ॥
कुतूहलप्रीतिया सदैव श्वश्र्वा तया गौतमया सिषेवे ॥ ३७ ॥

आसीदहल्या वनिता कदाचिद्विलक्षणच्छर्दिविकारयुक्ता ॥
अरोचनाऽस्या च सुजृम्भणा च प्रकाशमाना तनुरोमराजिः ॥ ३८ ॥

आज्ञा प्रमाणं खलु मन्यमाना भार्या स्नुषा यस्य मनोज्ञशीला ॥
सकौतुका बुद्धिरिति त्रिवेण्यां स्नातोऽभवद्गाढमहो स भूपः ॥ ३९ ॥

१. तस्य विविधप्रकारानितःपरं वर्णयति कविः।

भूपस्नुषा गर्भवती ह्यहल्या यदापि साध्वन्नविहारशीला ॥
प्रशोष्यमाणा कदलीव गेहे शरीरतः साऽतिकृशा तदाऽभूत् ॥४०॥

यद्भक्ष्यमाणस्य किलौदनस्य नित्यं यथावच्छुचिसात्विकस्य ॥
गर्भे शरीरे च विभागतः किं लोके सदा गर्भवती कृशास्ति ॥४१ ॥

यदा समीपप्रसवा बभूव मल्लारिराजस्य सुतस्य पत्नी ॥
तेजस्वितां चातिदधार देहे प्राचीव सायं मधुपौर्णमास्याम् ॥ ४२ ॥

श्रीशालिवाहेऽद्रिरसप्रयुक्ते शते नृपाख्ये सुदि माधवे च ॥
मल्लारिराजस्य वधूरहल्या प्रसूत देपालपुरे सुपुत्रम् ॥ ४३ ॥

नै राजधानी जनने स्वसूनोः प्रियाऽभवन्नैव नवात्मसौधः ॥
यस्यास्ततो ज्ञेयमिदं स सत्या वासेन देपालपुरः सुयोगः ॥ ४४ ॥

भूपस्तदा नप्तृमुखं दिदृक्षुः सोत्साहमागत्य पुरे सभार्यः ॥
चकार मोदान्नगरं सुचारु द्विजातये वस्त्रधनप्रदानम् ॥ ४५ ॥

नप्तुर्मुखेन्दुं प्रमुदं विलोक्य नाकं स्वयं वामनतामनैषीत् ॥
उक्त्या श्रुतेश्चित्तचकोरकस्य स चाप्यनिर्वाच्यसुखानुभावान् ॥४६॥

* मालेशब्दाद्विष्णुकामौ किलोक्तौ युद्धे नूनं रावयन् भीषयँश्च ॥
“ मालेरावो ” नाम मे नप्तुरास्तामेवं काले संस्कृतिं यश्चकार ॥४७॥

दीपैश्च देपालपुरं स भूपो नप्तुर्वपुर्हीरकमौक्तिकैश्च ॥
मनांसि दारिद्र्यजुषां जनानां प्रकाशयामास यथेष्टदानैः ॥ ४८ ॥

१. १६७६ वैशाखमासे शुद्धपक्षे श्रीमदहल्यायाः प्रसूतिः। २. तत्र नात्मसौधः न राजधानी प्रियाऽभूत् अपि च सत्या अहल्याया निवासेन देवालपुरस्य सुयोगः प्राप्त इति ज्ञातव्यमित्यर्थः। ३. यथासंख्यमित्यर्थः। ४. ह्रस्वत्वं अनयत्—स्वर्गमपि ह्रस्वं मेने इत्यर्थः ५ “ मालेराव ” इति नाम्नोऽर्थे निर्वचनेन प्रकटयति स्वयमेवात्र कविः। ६ नामकरणसंस्कारं। * शालिनीवृत्तम्।

लीलावलोकेन शिशोर्गृहेषु कृत्यानि सर्वाण्यवशेषितानि ॥
स्त्रीणाममन्यन्त दिनानि तेन ग्रीष्मस्य तान्यातिलघूनि नूनम् ॥४९॥

कचित्त्वहल्यावदनेन्दुना तत्प्रफुल्लमास्याम्बुजमर्भकस्य ॥
दृष्ट्वा मुदम्भोधिरपि प्रपूर्तिं प्रापातिवेलं ननु गौतमायाः ॥ ५० ॥

शिशोः शयानस्य नृपस्य देहः शनैः शनैर्यत्परिवर्तिताङ्गः ॥
भूमिं समग्रां च विना प्रयत्नाद्वशीकरिष्ये किममूचयत्सः ॥ ५१ ॥

बालस्ततो भूमितलेऽसहायं बभौ चिरायैव सुखोपविष्टः ॥
स्थित्वा स्वगेहे सकलान् प्रदेशान् संरक्षयिष्येऽहमदर्शयन्नु ॥५२॥

ततः कुमारे त्रिवलीयुताङ्गे तृतीयवर्षे पदमादधाने ॥
मल्लारिदेवस्य कृपाकटाक्षात् स्नुषा पुनर्गर्भवती बभूव ॥ ५३ ॥

पूर्णेषु मासेषु सरोरुहाक्षी प्रासूत मल्लारिवधूरहल्या ॥
अन्यामिव क्षीरसमुद्रकन्यां कन्यां किलाऽशेषसतीषु मान्याम् ॥५४॥

जहार पूर्णेन्दुमुखी जनानां मनांसि सा कोमलपद्महस्ता ॥
मुक्ताभिधाना च कुरङ्गनेत्रा बिम्बाधरा कोमलपादपद्मा ॥ ५५ ॥

दिने दिने सा ववृधे गृहेषु प्रमोदपात्री नरपालपौत्री ॥
सचन्द्रिका माधवयामिनीषु शुक्ले हिमांशोरिव खे निरभ्रे ॥५६॥

सुतोऽपि पूर्णेन्दुमुखः स्नुषायाः क्रीडन् वयस्यैश्च सदा नृपस्य ॥
आनन्दविश्रान्तिसुखस्य भूमिरासीदुद्वृयोः सन्ततमन्तराङ्गे ॥ ५७ ॥

ततो वयस्याननिगम्य गृह्णन् सुशिक्षितं पण्डितशिक्षकेण ॥
आसीदहल्यातनयः प्रसिद्धः पिता महानन्द इवावतीर्णः ॥ ५८ ॥

आलेखयन् मञ्जुललेख्यवर्णान् संवाचयन् यो लघुपुस्तकानि ॥
उदघाटयन् यद्गणितानि सर्वाण्यासीत्स विद्यार्थिजनेष्वखर्वः ॥५९॥

१. आनन्दसागरः । २. वसन्तमासरात्रिषु. ।

सोत्साहचित्तो गुरुभिः प्रपृष्टः प्रत्युत्तरं यः प्रददौ सुयुक्तम् ॥
मनीषया सूक्ष्मविचारयाऽसौ तच्छिक्षकार्यं श्लथितानकार्षीत् ॥ ६० ॥

मेधाविनी यद्भगिनी च बाला मुक्ता सकृच्छिक्षकपाठिता च ॥
जहास कालेन विवर्धमानं कलानिधिं पूर्णकलाप्रवीणा ॥ ६१ ॥

आसीदपत्यद्वितयेन युक्ता गृहेष्वहल्या मुदितान्तरा सा ॥
वेदान्तसिद्धान्तविचारणायां बुद्धिर्यथा भक्तिविरागयुक्ता ॥ ६२ ॥

स्वच्छन्दसंचारकरः सदैव हिंस्रान् पशून् व्याघ्रमुखाननेकान् ॥
यः पालयामास स तेन लोके न्यदर्शयाद्भिन्नरुचिं जनस्य ॥ ६३ ॥

स्वराजधान्यामुरुहस्तिशालामाबध्य पाषाणचितान्तराङ्गाम् ॥
सदा गजक्रीडनमप्सु नद्यां कौतूहलेनेव स पश्यति स्म ॥ ६४ ॥

व्याघ्रादिकानां महतां पशूनामाहिण्डनं पालनपोषणादि ॥
क्रीडागजानामनुपश्यतः स्युर्बहूनि कार्याणि लघून्यहानि ॥ ६५ ॥

शूरे कुले जन्म च राजगेहे माताऽग्रगण्या च सतीष्वहल्या ॥
पुत्रः पशुक्रीडनमात्रबुद्धिरत्र प्रमाणं खलु पूर्वकर्म ॥ ६६ ॥

कन्यां च मुक्तां सुमतिं सुशीलां खनिं गुणानां प्रविलोक्य माता ॥
तस्या विवाहे कुरुते स्म चिन्तां माता सुतामङ्गलमात्रचित्ता ॥ ६७ ॥

आत्मप्रदेशं परमव्यवस्थं चोरैः शठैः पीडितपान्थलोकम् ॥
ज्ञात्वा ह्यहल्या पारितोषपूर्वमुद्घोषयामास सभाजनेषु ॥ ६८ ॥

१. मुक्ता ( अहल्याकन्या ) बाला सती सकृच्छिक्षकशिक्षिता चैतत्कालं पूर्णकलावती जाता। चन्द्रस्तु कियता कालेन विवृद्धः सन् पूर्णो ( कलावान् ) भवति इति हेतुना तं चन्द्रं जहासेत्याशयः। २. आसीदहल्या स्वगृहेषु नित्यं स्वधीतपुत्रद्वितयेन युक्ता इति पाठान्तरम् ३. भिन्नरुचिर्हि लोक इति दर्शयामासेत्यर्थः। ४. तस्य राजपुत्रस्येतिशेषः। ५. पारितोषिकं। ६. सभायां ये जना आसन् तानधिकृत्येत्यर्थः।

यस्तान् परावृत्य निषिद्धकृत्यात्सदा सुशीलान् विदधीत यत्नात् ॥
शूराय विद्याकुशलाय तस्मै कन्यां प्रदद्यामहमादरेण ॥ ६९ ॥

स्वराष्ट्रसंरक्षणमात्रकामा परीक्षणे सा कुशला वरस्य ॥
गुणद्वयं दर्शयितुं स्वकीयं प्राचीकशद्घोषणमित्यहल्या ॥ ७० ॥

निस्तन्द्रिको भूपतिकार्यकर्ता दयार्द्रचेता जनदैन्यहर्ता ॥
स्वस्वामिभक्तो निजकार्यसक्तो बभूव वंशे "फणसे" प्रजातः ॥७१॥

धीरः सुशीलो यशवन्तनामा रणाङ्गणे शत्रुगजेन्द्रसिंहः ॥
शूरः कुलीनस्त्वरया यथाज्ञं निर्वर्तयामास नृपस्य कार्यम् ॥ ७२ ॥

यशोऽवतंसं यशवन्तशूरं वृत्वा च कन्या रमते स्म मुक्ता ॥
नवं सुगन्धिं सुमकोरकं च विलोक्य भृङ्गी न च का रमेत ॥ ७३ ॥

एतादृशं सर्वगुणोपपन्नं मनोज्ञरूपं पुरुषं युवानम् ॥
दृष्ट्वा सुतासंसृतिसौख्यहेतु कुर्याच्छिवं प्रार्थयदित्यहल्या ॥७४॥

शूराय सेनापतये वराय धीराय शत्रुष्वपराजिताय ॥
ज्योतिर्विदादिष्टवरे मुहूर्ते कन्यां ददौ सा श्वशुरानुमत्या ॥ ७५ ॥

चन्द्रो यथा कुमुदिनीं स्वकराभिमृष्टां किंवा रविः कमलिनीं सुविनीमकार्षीत ॥
मुक्तां तथा नववधूं यशवन्तनामा भर्ता मृगेन्द्रसुरनिष्ठगजेन्द्रगोरः ॥ ७६ ॥

कन्यां दत्त्वा श्रीमते सद्वराय निश्चिन्ताऽभूत्स्वण्डुजाया च साध्वी ॥
लोके श्रेष्ठो द्रव्यस्पर्शो प्रदाय सौख्यं धत्ते द्रव्यनिक्षेपकाय ॥ ७७ ॥

चोरान् लुण्ठान् दण्डनैः सामवाक्यैर्वश्यान्कृत्वा राज्यसंरक्षणेऽकृत् ॥
राजानुज्ञां देववन्मन्यमानं तं साऽहल्या धन्यवादैरतोर्षीत् ॥ ७८ ॥

१. राज्ञ्याज्ञानुसारेण। २. वसन्ततिलकावृत्तम्। ३. शालिनीवृत्तम्।
४. वृत्तमकरोत्।

लब्ध्वा यशोवन्तपतिं महान्तं तथैव संसारसुखानुभावम् ॥
निर्वर्त्य मातुः सकलां च चिन्तामानन्दयामास च मातरं सा ॥७९॥

प्रासूत पुत्रं यशवन्तराजान्मुक्ता सतीलक्षणराजमाना ॥
[illegible] शारदपौर्णमासी निशामुखे चन्द्रमिवोज्ज्वलन्तम् ॥ ८० ॥

माता[1] भूपकुलाग्रणीरभिमता सर्वप्रजानां सती ॥
कन्यापुत्रसमुद्भवं च परमं सौख्यं च सांसारिकम् ॥ ८१ ॥

तस्मादप्यधिकं द्युलोकफलदं दौहित्रवक्त्रं शुभ– ॥
मद्राक्षीत्तदमन्यतेव च महासंसारभारं लघुम् ॥ ८१ ॥

इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते श्रीमदहल्याचरिते तस्याः संसारसौख्यवर्णनं नाम तृतीयः सर्गः ।

१. शार्दूलविक्रीडितं वृत्तम् ।

# चतुर्थः सर्गः ।

शिष्य उवाच—

श्रीमद्गुरो ज्ञानविकासकारिन् सतीचरित्रं परमं पवित्रम् ॥
श्रुत्वा न तृप्तोऽहमतः पुरस्ताच्छ्रोतुं पुनस्तत्परमुत्सुकोऽस्मि ॥ १ ॥

गुरुरुवाच—

खण्डोजिभूपप्रियधर्मपत्नी सती स्ववृत्त्या श्वशुरप्रियाऽभूत् ॥
नूनं गिरीशाङ्घ्रिसरोजभृंगी सदा तदाराधनतत्परा च ॥ २ ॥

सम्पूज्य नित्यं गिरिशं धवं च श्वश्रूं च भक्त्या श्वशुरं च वृद्धम् ॥
अनन्तरं भागवतादिकानि संश्रावयामास पुराणवक्तुः ॥ ३ ॥

खण्डोजिभूपोऽपि पितुः सकाशादासीच्च सङ्ग्रामकलाप्रवीणः ॥
तथैवलुब्धो विषयोपभोगे मद्यादिदुष्टव्यसनेषु रक्तः ॥ ४ ॥

शूरः पिता भार्गव एव साक्षात् रणाङ्गणे शत्रुविनाशकारी ॥
तस्यैष सूनुर्विषयप्रलुब्धः मन्ये हि तत्प्राक्तनकर्महेतुः ॥ ५ ॥

शूरौ च मातापितरौ सुशीलौ सदा शिवाराधनतत्परौ च ॥
सूनुस्तयोरेष विनिंद्यकर्मा संभाजिरेवैष सुतः शिवाजेः ॥ ६ ॥

युवा कदाचिन्मधुपानमत्तो विलासिनीनामधराग्निपीय ॥
सदादुराचाररतो विलासी शनैः शनैर्दुर्व्यसनी बभूव ॥ ७ ॥

१. उपजातिवृत्तम् । २. पतिं । ३. इतराञ्जनान अर्थात् स्वयमपीत्यर्थः
४. शिवरायपुत्रः शम्भुः ।

भार्या शिवाराधनतत्पराऽऽसीत् पतिश्च रामाधरसेवनोत्सुकः ॥
सेवापरौ द्वावपि तौ तदाऽस्तां परं तयोर्हृद्विषयो विभिन्नः ॥८॥

यद्यप्यसौ धन्यगृहे प्रजाता परं सदाचारपरायणाऽसीत् ॥
प्राक्कर्मपुण्यं च फलोन्मुखत्वे सन्नद्धमासीद्ध्रुवमेतदस्याः ॥ ९ ॥

स राजपुत्रोऽपि सुशिक्षितोऽपि पितुः कृपादृष्टिनिरीक्षितोपि ॥
प्राग्जन्मपापस्य फलं नु भोक्तुं सदा तदाऽसीद्विषयान्धदृष्टिः ॥१०॥

अन्योऽन्यहार्दं विषयोपभोगे परं प्रपञ्चे विमतं नितान्तम् ॥
एवं तदानीं प्रविरोधशीलं मल्लारिसौधे मिथुनं न्यवात्सीत् ॥११॥

तमःप्रधानाचरितश्च भर्ता सत्त्वप्रधानाचरिता च तत्स्त्री ॥
भूपस्य गेहेऽवसतामिमौ द्वौ तमःप्रकाशाविव भिन्नरूपौ ॥ १२ ॥

नित्यं सुतोऽयं व्यसनप्रलुब्धो मुहुर्मुहुस्तातसुशिक्षितोऽपि ॥
नीचानुगामीव बभूव लोके वारिप्रवाहः कृतपार्श्वबन्धः ॥ १३ ॥

सती स्वभार्या विषकण्ठसेवां कर्तुं सदाऽसक्तमना बभूव ॥
इतीव हेतोररुयुङ्क्त नित्यं मधु स्वकण्ठे खलु सेवितुं सः ॥ १४ ॥

साध्वी यथा स्वश्वशुरावहल्या भक्त्या सिषेवेऽन्वहमादरेण ॥
मल्लारिपुत्रोऽपि तथैव नित्यं माध्वीमदोत्सिक्तघुटौ प्रमत्तः ॥ १५ ॥

मान्यस्य साधोरपि पण्डितस्य दासस्य चाम्बापदपूर्वकस्य ॥
गुरोः परानुग्रहणेन साऽर्या सदा चिदानन्दमना बभूव ॥ १६ ॥

१. रामाणां-ललनानां अधरपाने चुम्बने उत्सुकः। २. यद्यपि तौ दम्पती सेवातत्परौ तथापि तयोस्सेवाविषयः भिन्न एवासीदित्यर्थः। ३. नीचं-निम्न-स्थलं पक्षे दुराचरणञ्च। ४. विषं कण्ठे यस्य सः। तस्य विषधरस्य शङ्करस्य सेवां भक्तिं। ५. मद्यं। ६. माध्वी मद्यं, मदोत्सिक्तघुटो नाम मादक घोटा इति महाराष्ट्र्याम्। ७. अम्बादास नाम गुरुः अहल्यादेव्याः, तस्य

खण्डूजिराजोऽपि विलासिनां च यूनां सदा दुर्व्यसने रतानाम् ॥
सम्भाषणैः सङ्गतिभिश्च नूनं परं हि पाखण्डमना बभूव ॥ १७ ॥

अमन्यतासारमनिष्टदं स्वं संसारमेतं न सुखस्वरूपम् ॥
तमिष्टदं सारदमम्बिकेशमन्तर्बहिःपूर्णसुखस्वरूपम् ॥ १८ ॥

करोति सार्थं हि मनुष्यजन्म नित्यं यथेच्छं विषयोपभोगः ॥
इतीव दुष्टान् विषयांश्च सर्वानास्वादयामास स राजपुत्रः ॥ १९ ॥

नित्यं पुराणश्रवणादिभिः सा ज्ञानार्जनं प्रत्यहमप्यकार्षीत् ॥
लब्धो भवेऽस्मिन् विविधैरुपायैः कणं कणं सञ्चिनुते सदैव ॥२०॥

एवं स्वभर्तुः प्रतिलोमशीलं शास्त्रैर्निषिद्धं परिणामदुःखम् ॥
विज्ञाय संसारविमोचनाय गुरुं तमेव प्रतिपद्यते स्म ॥ २१ ॥

मल्लारिरायस्य गृहेष्वहल्या सौख्यं परं स्वर्गसुखातिशायि ॥
सर्वं परित्यज्य शनैः शनैः सा निर्वेदमायात्प्रविवेकशीला ॥ २२ ॥

पतिः स्त्रियाः संसृतिचक्रमध्ये सत्यं सदा सर्वसुखैकहेतुः ॥
स चेदहोऽस्याः प्रतिकूलवृत्तिर्निर्वेदतोऽन्यच्छरणं किमस्ति ॥२३॥

स्त्रियाः पतिश्चेदनुकूलवृत्तिः सौख्यं परं वैषयिकं प्रदत्ते ॥
स एव चेत्स्यात्प्रतिकूलवृत्तिर्निर्वेद एवामृतसौख्यदाता ॥ २४ ॥

पत्याश्रयं स्त्रीसुखमेतदेव वर्णत्रयेऽस्मिन् जगति प्रसिद्धम् ॥
इतीव निर्वेदसुखानुभूतिं खण्डूजिजायाऽप्युररीचकार ॥ २५ ॥

आरम्भसौख्यात्परिणामदुःखाद्भवाम्बुधेः श्रेष्ठमसावहल्या ॥
निर्वेदमेनं वृणुते स्म यस्माद्दत्ते फलं तद्विपरीतमेषः ॥ २६ ॥

१. पार्वतीपतिं शङ्करम्. अत्र व्यतिरेकालंकारः । २. प्रमादकारण भर्ता यदि प्रतिकूलवृत्तिस्स्यात्तर्हि साध्वी स्त्री निर्वेदादन्यं कं शरण यायात्, पत्युः प्रतिकूलाचरणेन नित्य मेव सा दुःखमेवानुभूतवतीत्यर्थः । ३. त्रैवर्णिकादिषु । ४. निर्वेद–इत्यपि वर्णत्रयम्–वेदरहितत्वं न स्त्रीणां ।

पिताऽथ मल्लारिनृपः कदाचिद्विधाय सन्नद्धगुरुस्वसैन्यम् ॥
सेनापतित्वेन सुतं तथाऽन्यं प्रवर्तयामास जिगीषयाऽरीन् ॥ २७ ॥

जाटोपनाम्ना प्रथिता जगत्यां जघन्यजाः केचन मानवाश्च ॥
मल्लारिराजस्य सुखे प्रदेशे कृताधिवासा विविधा अभूवन् ॥ २८ ॥

चोराश्च केचिच्च कृषीवलाश्च भूपाश्च केचिद्यवनत्वमाप्ताः ॥
ये केवलं स्वोदरपूर्तिनिष्ठा जानन्ति नो धर्ममधर्ममेते ॥ २९ ॥

एषां नृपः सूरजमल्लनामा कुम्भेरिसंज्ञः किल तस्य दुर्गः ॥
युद्धेषु शौण्डैर्बलिभिश्च भूपैरजेय आसीद्भृगुरेव युक्तः ॥ ३० ॥

मृत्स्नाभिरत्यन्तदृढीकृताङ्गः सुरेन्द्रवज्रप्रतिमः स दुर्गः ॥
यन्त्रैर्महद्भिर्दृढगोलयुक्तैर्मनागसौ पातयितुं न शक्यः ॥ ३१ ॥

या मृत्तिका खल्वरसाभिमृष्टा यत्नेन मासं किल कर्मकारैः ॥
ताभिः प्रयत्नाद्रचिते भृगौ यः कुण्ठीभवेद्यत्र पविप्रहारः ॥ ३२ ॥

विनिर्गते लोहबृहन्नलेभ्यो गोलैर्बृहद्भिश्च परः शतघ्नैः ॥
किञ्चिन्न भिद्येत च यस्य वप्रः संरक्षितोऽभूदिति जाटसैन्यैः ॥३३॥

योधा नृपाङ्केकपराश्च शूरा ये निर्भयाः शत्रुगजैकसिंहाः ॥
यत्र स्थिताः प्राणमपि प्रदद्युः परं न सेनापतयस्तु दुर्गम् ॥ ३४ ॥

श्रीराघवेन्द्रः खलु खानदेशाद्दत्ताजिशिन्दे निजमध्यदेशात् ॥
मल्लारिरायेण सहाजमीरदेशं गतौ राजकरं ग्रहीतुम् ॥ ३५ ॥

मल्लारिसूनुः सह जाययासौ विलोकितुं शूरजनेषु शौर्यम् ॥
कुम्भेरिदुर्गं परमाजगाम सूनोः स्वभावः पितृकृत्यवीक्षा ॥ ३६ ॥

जाटानयाचन्त ततः करं ते ददुर्न गर्वेण परन्तु जाटाः ॥
शूरः परेभ्यो न करं प्रदत्ते करास्थितं शस्त्रमिव प्रहर्तुम् ॥ ३७ ॥

१. तटे। २. पेशवे राघोबादादा।

ततोऽतिकोपान्नृपराघवेन्द्रः ससैन्यसेनापतिना समं सः ॥
आदाय मल्लारिसुतं च शूरं कुम्भेरिदुर्गे त्वरयाऽभ्ययासीत् ॥ ३८ ॥

क्रूरांश्च वन्यानिव जाटसङ्घा रणाङ्गणे निर्भयमानसास्ते ॥
विलोक्य सिंहा इव गर्जयन्तो जघ्नुः परान्प्रत्यभिघातिनश्च ॥ ३९ ॥

*तस्मिन् युद्धे खड्गिनः खड्गवन्तः शूरा अन्ये सादिनः सादिनोऽपि ॥
हस्त्यारोहाः केचिदाधोरणांश्च जीवग्राहं जघ्नुरेवं समस्ताः ॥ ४० ॥

योधाः परे तीक्ष्णतरैश्च कुन्तैरघ्नंस्तदा दुर्जयजाटसैन्यम् ॥
युधि प्रवीणाः पुरतः स्वलक्ष्यं कथं न विध्येयुरधीतविद्याः ॥ ४१ ॥

नालीकगोलैरभियोधमुग्रा जाटाः प्रयत्नात्कृतदुर्गरक्षाः ॥
शत्रून्विनिघ्नन्त्यभियन्त्यभीक्ष्णं शत्रोर्जयं के बलिनः सहेरन् ॥ ४२ ॥

गृहे स्थिता निर्भयमानसाश्च राजाज्ञया सञ्चितधान्यसैन्याः ॥
अधःस्थितं शत्रुबलं निहन्तुमतो न चैते क्षणमप्यबिभ्यन् ॥ ४३ ॥

स्वयं सुधीरा अभिजातशूरा जाटास्तथा सूरजमल्लनिष्ठाः ॥
दृढप्रयत्नं रिपुजीवनाशे कथं रणं नेयुरमी स्वदुर्गे ॥ ४४ ॥

यस्यासमन्तात्सिकताप्रदेशो वर्वर्ति लोकैर्विजिगीषुभिश्च ॥
स्थातुं च यत्र क्षणमप्यशक्यं दुःखैरगम्योऽयमितीव दुर्गः ॥ ४५ ॥

गोलैर्महद्भिर्बहुभिः सुलक्षैरन्यैरुपायैरपि पातयन्तः ॥
नाशक्नुवन् पातयितुं किलैनं कार्पाससूत्रैरिव पर्वताग्र्यम् ॥ ४६ ॥

आग्नेयचूर्णं विपुलं विधाय शस्त्राणि वह्न्यर्चिरिवोज्ज्वलानि ॥
शूराश्च योधा निहता नृपेण यस्मिन् स दुर्गो न भवेत्सुजेयः ॥ ४७ ॥

१. अरण्यभवान् पशून्। २. अश्वारोहाः। ३. हस्तिपकान्। ४. अभिपतन्ति (चाल करून जातात.)। ५. रणं न ईयुरिति पदच्छेदः। * शालिनीवृत्तम्।

यद्वल्लभा यत्र च भिल्लमल्लाः फलैश्च मूलैः परिफुल्लगल्लाः ॥
शत्रून्निहन्तुं प्रगृहीतभल्ला व्यभात्स्म ते सूरजमल्लयोधाः ॥ ४८ ॥

दत्ते चतुर्लक्षधनं स भूपः कोटिं परं काङ्क्षति राघवेन्द्रः ॥
द्वयोरतोषाच्च कराप्रदानं ततो रणोऽभूत्प्रबलः स हेतुः ॥ ४९ ॥

दातुर्ग्रहीतुर्महदन्तरं यद्बभूव तद्योद्धृविनाशकारि ॥
स्वल्पोऽपि भेदो[1] महतो लघूनां सर्वाणि गात्राणि भिनत्ति लोके ॥५०॥

मल्लारिपुत्रो व्यसनार्दितोऽपि कुम्भेरिदुर्गे स्थितयोद्धृवर्गम् ॥
जेतुं स कौतूहलयुक्तचेतास्तत्राजगाम स्वबलं गृहीत्वा ॥ ५१ ॥

रणाङ्गणे द्वौ ननु राघवेन्द्रमल्लारिरायावपरौ मृगेन्द्रौ ॥
कुम्भेरिदुर्गे स्थितयोधवर्गे प्रावर्ततां सैन्यमृगाशनाय ॥ ५२ ॥

ऋत्विग्वरौ द्वौ पुरतः स्थितौ तावध्वर्युरासीत्किल तत्र सूनुः ॥
रणाङ्गणेऽग्नौ प्रददावसङ्ख्या जाटाहुतीः खड्गमयस्रुवेण ॥ ५३ ॥

शूरा रणे यद्यपि राघवाद्याः शत्रून्व्यराजन्त विजेतुकामाः ॥
अकल्पितं तत्र समागतोऽयं मल्लारिसूनुर्नियतेर्विपाकात् ॥ ५४ ॥

योद्धा महान् यत्र विराजते स्म मल्लारिरायो जवनोऽथ शूरः ॥
द्वितीयमार्तण्ड इवैष तत्र खण्डूजिरायो हि हिमांशुरासीत् ॥ ५५ ॥

तथाऽपरोऽयं ननु राघवेन्द्रः शूरः समान् शत्रुगणान् विजेतुम् ॥
प्राकाशतानेकसुखैर्विवृद्धः खण्डूजिपुत्रोऽभवदल्पशूरः ॥ ५६ ॥

मल्लारिमुख्येष्वरिदिभाजेन्द्रसिंहेषु युद्धे विलसत्सु सत्सु ॥
खण्डूजिरायः किल सिंहशावः श्रान्तोऽभवत्तत्र गतागतेन ॥ ५७ ॥

गर्जत्सु सिंहेषु न शावशौर्यं विद्वत्सु वाग्मिष्विव शिष्यविद्या ॥
तथा न मल्लारिमुखेषु तत्र सूनोः प्रतापः प्रकटीबभूव ॥ ५८ ॥

१ फितुरी इति महाराष्ट्र्याम्।

तथापि जाटानधिमन्यमानान् रिपून् विजेतुं समभिप्रवृत्तान् ॥
खण्डूजिरायश्चक्रमे निहन्तुं तान्मूषकानोतुरिव प्रसह्य ॥ ५९ ॥

बालोऽपि सूनुर्दमयँश्च शत्रूनकोप्यभूत्तस्य विनाशकारी ॥
अङ्गारकः सूक्ष्मतरोऽपि लोके कार्पासराशिं प्रदहत्यशेषम् ॥ ६० ॥

परं स दुर्दैवपिशाचिकाया वशो बभूवेति मधुप्रपीतः ॥
दैवं जगत्यां महदल्पकं वा शुभाशुभं नो विविनक्ति किञ्चित् ॥६१॥

मल्लारिपुत्रो विविधैरुपायैः शत्रून्निहन्तुं यतते स्म तत्र ॥
इतीव हेतोर्निजमृत्युमाप्तं नावैद्ध्रुवं सन्निहितं परं तम् ॥ ६२ ॥

* अहल्यापतिः शत्रुमन्याब्धिमध्ये प्रविष्टोऽसिभिस्तिग्मदन्ताग्रभागैः ॥
महामीनरूपो लघून् जाटमत्स्यांस्तदा भक्षयामास तूर्णं प्रयत्नात् ॥६३॥

† तावच्छत्रुगृहीतलोहगुटिका प्रक्षेपणीवक्त्रतः ॥
प्रसा सूर्यनिभाचिराग्निगुलिका खण्डोजिभूपात्मजम् ॥
यावत्तत्प्रतिकारमिच्छति सुतस्तावत्पुरस्ताद्धृदि ॥
प्राविक्षद्रविमण्डलं च तमसि भित्वा किमु प्रेषयन् ॥ ६४ ॥

उदन्तं तं समाकर्ण्य मल्लारिप्रमुखा जनाः ॥
रुरुदुस्तं समागत्य निर्भरं दूनमानसाः ॥ ६५ ॥

इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते
श्रीमदहल्याचरिते खण्डेरावनिधनं नाम चतुर्थः सर्गः ।

१. न अवैत्–नाबोधत् २. असय: एव तीक्ष्णदन्ताग्रभागाः तैः। * भुजंगप्रयातं वृत्तम् । † शार्दूलविक्रीडितं वृत्तम् ।

## पञ्चमः सर्गः ।

—०—

* अथ तस्य पिता रणाङ्गणे श्रुतवानात्मजसेवकादितः ॥
स्वसुतस्य कठोरनिष्ठुरां मृतिवार्तां हृदयस्य शातनीम् ॥ १ ॥

पतितः स्खलितः क्षणादसौ कथमप्युत्थिवांश्च मूर्च्छितः ॥
सुतसन्निधिमागतस्तदा मृतमालोक्य पुनश्च मूर्च्छितः ॥ २ ॥

अयि बाल ममान्वये भवानभवत्केवल एक आश्रयः ॥
अतिनिर्घृणकालपाशकः कथमुन्मूलितवान् करोमि किम् ॥ ३ ॥

क्व गता कुलदेवताऽधुना किमु रुष्टा जगदम्बिका च मे ॥
किमकारि मयाऽद्य कथ्यतामखिलामर्षनिधे विधे तव ॥ ४ ॥

अतिकोमलमेककं फलं यदि वृक्षस्य मरुन्निपातयेत् ॥
परतः शतवर्षजीवनं भविता तस्य तथापि निष्फलम् ॥ ५ ॥

अयि संसृतिमूलमद्य मे ज्वलितं शात्रवगोलिकानलैः ॥
ज्वलिताः पुनरद्य भाविनः किमशेषा हि मनोरथाङ्कुराः ॥ ६ ॥

अथ तज्जननी विलोक्य तं नवनीतप्रभकोमलं सुतम् ॥
पतितं धरणीतले रणे कदली वातहतेव साऽपतत् ॥ ७ ॥

अयि घोटयि वागजायि भोरयि केदारक ठोसरेश्वरि ॥
मकयाख्ययि जानमानयि अयि पद्मावति कालिकेश्वरि ॥ ८ ॥

सकलाः कुलदेवताश्च मे प्रसभं किं कुपिता अशेषतः ॥
मम मूर्धनि वज्रपातनं यदकार्षुः खलु पुत्रमारणम् ॥ ९ ॥

१. धनगरजात्यां पूजनीयास्सर्वा एता देवताः । * वियोगिनीवृत्तम् ।

अयि कालकरालमानस प्रसभं तेऽस्त्यतिनिष्ठुरा मतिः ॥
मम पुत्रमिषेण मारिताः स च मातापितराविति त्रयः ॥ १० ॥

द्युमणेः प्रखरैः करैर्यथा कदली भ्रष्टफला सुपुष्पिणी ॥
वितथा जगतीतले तथा जननीयं समभूत्प्रियार्भक ॥ ११ ॥

अपि शीलवती पयस्विनी भुवि गृष्टिः प्रविनष्टतर्णका ॥
उदरंभरिरेव केवलं मरणाद्वापि फलं न जीवनात् ॥ १२ ॥

जननादहमन्वहं विभो विहिताचारपरायणाभवम् ॥
किमु तत्फलमेतदेव भोः कुलतन्तोस्तनयस्य मारणम् ॥ १३ ॥

जगतीतलवर्तिनो द्रुमा न न रोहन्ति विताङ्कुरा अपि ॥
तनयस्य मृतेर्मम त्वया विहितं वंशतरोर्निकृन्तनम् ॥ १४ ॥

सुखजीवितयोस्तयं मृधे यदि पित्रोस्तनयो निहन्यते ॥
जगदुद्भवकार्यकारिणः किमहो रीतिरियं विलक्षणा ॥ १५ ॥

समयेऽत्र तदङ्गना गता स्वपतेर्मृत्युमहो विशृण्वती ॥
पतिता पतिदेहसन्निधाविव यष्टिः खलु तत्र मूर्च्छिता ॥ १६ ॥

बहुना समयेन तां तदा श्वशुरो जीवनसेचनादिभिः ॥
अपि चेतयति स्म मूर्च्छिता पुनरुच्चैररुदद्रणाङ्गणे ॥ १७ ॥

अयि भोः प्रिय राजपुत्रक मम चेतस्स्थित मुख्यदैवत ॥
प्रियराज मदङ्गवल्लरीपरमाधार महीरुह प्रभो ॥ १८ ॥

अयि किं मयि नैव भाषसे किमु मे कुप्यसि हेतुना विना ॥
मदघं यदि विद्यते प्रभो त्वरया तूर्णमुदीर्यतां त्वया ॥ १९ ॥

१. सकृत्प्रसूता धेनुः । २. मृतवत्सा । ३. समरे । ४. जलसेचनादिभिः

अयि मीलितपद्मनेत्र भोस्तव दासीं पुरतः स्थितामिमाम् ॥
रुदतीमपि नैव पश्यसि क्व गता साद्य दयालुता तव ॥ २० ॥

कलमञ्जुलनर्तकीध्रुवस्वरगानं श्रुतवानसि प्रभो ॥
अधुना मम नो शृणोषि किं मधुरा क्रन्दनमर्ममेकोरकम् ॥२१॥

मधुरं मधु मादकं मुदा सततं तं स्वजनैर्निपीतवान् ॥
प्रियराज ममाद्य जाह्नवीजलमेतद्धि समर्प्यते पिब ॥ २२ ॥

अयि वल्लभ तेऽङ्गनाधुना विनयात्प्रार्थयते मुहुर्मुहुः ॥
उररीकुरुषे न चैकमप्यलसत्वं वपुषि प्रतिष्ठितम् ॥ २३ ॥

विषयान् सकलाँश्च सेवितुं सततं सिद्धपदो भवान् सदा ॥
तदिदं सकलं विहाय भोरधुना निर्विषयं कथं गतः ॥ २४ ॥

किमकारि मयाधुना प्रभो शिव मन्तुस्तव तन्निवेद्यताम् ॥
विधिना मम मूर्धनि त्वया खलु वैधव्यशिलाद्य पतिता ॥ २५ ॥

यदनेकमनोरथाँस्त्वया सह कर्तुं सदयं प्रवर्तिता ॥
समयेऽस्तमिहार्पितः प्रभो मम सौभाग्यरविः किमीश्वरः ॥ २६ ॥

अयि बालकबालिके इमे कुरुतो हूतिमथार्द्रमानसे ॥
श्रुतवानसि तां न साम्प्रतं सुतवात्सल्यमहो क्व ते गतम् ॥ २७ ॥

न मयोपयमे यथायथं किल गौरीहरपूजनं कृतम् ॥
अथवा न च पूजिता शची किमिदं स्यात्तदमर्षजं फलम् ॥ २८ ॥

अयि देवि सुमङ्गले शुभे बहुपुष्पाद्युपचारपूजिते ॥
विहिता हरितालिके त्वया किमियं जीवितशोषणी दशा ॥ २९ ॥

१. मर्मभेदकम् । २. अपराधः । ३. नीतः । ४. आह्वानम् ।
५. किमरे । ६. मङ्गलागौरि ।

अभिजात यदेकमारणात्सहजं स्युः सकला मृता जनाः ॥
इति दूरविचारकारिणी कुशला बुद्धिरहोऽस्ति ते विधे ॥ ३० ॥

यदि दुर्विधिरेव भूतले मृतिदाने खलु बद्धकङ्कणः ॥
न च तत्प्रतिकारहेतवे यतनीयं किमु मृत्यमेव तत् ॥ ३१ ॥

अथ तत्र समागतः पुनः श्वशुरो वक्तुमधीरमानसः ॥
स्ववधूमतिदुःखकारिणीं मृतनाथां हरिणीमिवार्दिताम् ॥ ३२ ॥

अहल्ये स्नुषे त्वं समाधत्स्व दुःखं न कुर्या मया प्रार्थ्यसे त्वं चिराय ॥
करालो हि कालो न जीवस्य दुःखं विजानाति कार्यं स्वकार्यं विधत्ते ॥३३॥

संस्तभ्य रोदनमथाश्रुमुखी कराभ्यां नेत्रे विमृज्य सविधे स्वधनस्य गत्वा ॥
नित्यं निजप्रियसमागमलाभकामा भर्त्रा सहैव गमनं चकमे ह्यहल्या ॥३४॥

वासो नवीनमथ सा परिधाय शुद्धं सौभाग्यकारि मणिकङ्कणभूषणानि ॥
सन्धार्य शुद्धहृदयातिपवित्रदेहा मन्त्रं जजाप मनसा च नमः शिवाय ॥३५॥

दृष्ट्वा तदीप्सितमथ श्वशुरः स वध्वाश्चिन्तामवाप परमामतिदुःखितः सन् ॥
अस्याः सहाभिगमनादथ मन्यते स्म वंशेन साकमधुना निजराज्यनाशम् ॥३६॥

श्वशुर उवाच—

[2]बाले वधूश्च भवती दयितेन साकं देहं विनाशयतु मा मम देहि भिक्षाम् ॥
मन्ये वधूर्मम मृता न सुतो मृतो मे राज्यं स्वदेहममलं श्वशुरं च रक्ष ॥३७॥

[2]शूरोऽपि पुत्रमरणादहमद्य भीतो धीरस्तवाथ मरणे गलितो भवामि ॥
[2]बाले त्वमद्य च कुलस्य ममैक एव स्तम्भाश्रयः किल न चान्यदितीव मन्ये ॥३८

[2]बाले मतिस्तव नवीनकुशाग्ररूपा राष्ट्रादिकार्यकरणे दृढनिश्चया च ॥
तस्मादिमां सकलराज्यधुरं च तुभ्यं प्रेम्णापि सादरमना अनिवाहयामि ॥३९॥

१. भुजङ्गप्रयातं वृत्तम्। २. वसन्ततिलकावृत्तम्।

**अहल्योवाच—**

[1]सत्या निवासो जगतीतलेऽस्मिन् पत्या समं स्यात्सकलार्थदायी ॥
इत्यादरेणाग्निमहं प्रवेक्ष्ये क्षित्यादिभिर्बंधनकारिभिः किम् ॥ ४०॥

[2]स्त्रीपुंसयोर्यस्य युतिः समक्षं स आश्रितव्यो हि निवासभूमिः ॥
इतीव वह्निं तमहं प्रवेक्ष्ये तदेव योग्यं मम तातपादाः ॥ ४१ ॥

विघ्नान् न कुर्वन्तु कदापि मह्यं भवन्त इत्थं परमादरेण ॥
सम्प्रार्थयेऽहं चरणाब्जदासी कल्पद्रुमस्त्वं फलपूरकोऽभूः ॥ ४२ ॥

[3]अनाथायाः किं मे सकलपृथिवीराज्यकरणे ॥
न सौख्यं मे द्रव्याद्धनदवसुतो वा समधिकात् ॥
न मे भर्तुः पादाम्बुरुहमकरन्दादितरथा ॥
सुखं विश्रान्तिर्वा तदिह मम युक्ता सहगतिः ॥ ४३ ॥

[2]भर्तुः पदाब्जेऽर्पितजीवितायास्ततश्च सम्पूर्णमनोरथायाः ॥
न किं भवन्तोऽतिदयालवश्चेदित्थं ममेष्टं किल पूरयेयुः ॥४४॥

[5]ब्रूते तस्यै वृद्धमल्लारिराजो बालेऽहल्ये मा स्म चैतत्तु कार्षीः ॥
सर्वं नष्टं स्याद्भवत्यां मृतायामेतस्मात्त्वं माकरोः सर्वनाशम् ॥४५॥

[3]सुशीले भो बाले सहगमनसङ्कल्पमयि ते ।
समाकर्ण्येदं मे दृढमपि विदीर्णं तु हृदयम् ॥
कटिर्भग्ना पादावपि च गलितावद्य धिषणा ।
पुनर्मोहं प्राप्ताप्यहह किमु कुर्वे कथय मे ॥ ४६ ॥

इत्थं तस्मिन् भाषमाणे च ताते शोकावेगाद्रुद्धकण्ठे च जाते ॥
अम्बादासः सद्गुरुः पुण्यकर्मा तत्र प्राप्तो मूर्तिमान् धर्मराजः ॥ ४७ ॥

१. इंद्रवज्रावृत्तम्। २. उपजातिवृत्तम्। ३. शिखरिणीवृत्तम्। ४. धनदः कुबेरः। तस्य धनापेक्षया। ५. शालिनीवृत्तम्।

सैनां पतिवियोगतो मतिमती न सम्भाविता
गुरोर्गतिमथाशृणोन्नृपतिसेवकास्यात्ततः ॥
कथंचन समुत्थिता स्वगुरुपादपद्मेऽपतत्
ततो गुरुकृपादृशोल्लसितमानसा साभवत् ॥ ४८ ॥

ततो वक्तुकामां स्वशिष्यामहल्यां समाधातुकामो गुरुः सद्वचोभिः ॥
समाभाषतैनामनिश्चयप्रचित्तां कृशाङ्गीमिवार्द्रां मनःपद्मसद्माम् ॥४९॥

श्रीशालिवाहनशके [2]शरसप्तशास्त्रपृथ्वीमितेऽहनि च फाल्गुनकृष्णपक्षे ॥
एकादशी शुभतिथावरिजातदुर्गे मल्लारिसूनुरगमद्दिवमण्डलान्तः ॥५०॥

इति श्रीमद्भागवतोपाभिधबापशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते
श्रीमदहल्याचरिते अहल्याविलापो नाम पञ्चमः सर्गः ।

१. पृथ्वीवृत्तम् । २. १६७५ नाम वत्सरे ।

## षष्ठः सर्गः ।



अथ तद्गुरुरागतस्तदा मृतिमाकर्ण्य सुतस्य भूभुजः ॥
तनयामुपदेष्टुमभ्ययात्किमु कैलासगिरेः शिवः स्वयम् ॥ १ ॥

अयि सूक्ष्ममते नृपस्नुषे हृदि शोकं कुरु मा शिवार्चिके ॥
निजभालगतं शुभाशुभं खलु जीवा उपभुञ्जते भुवि ॥ २ ॥

[2]बाले दुःखं नो विधेयं त्वयाद्य सोढव्यं यत्सर्वथा दिष्टदत्तम् ॥
केनोपायेनाप्रतीकार्यमेतद्यस्माद्भुक्तेर्नान्यतस्तत्र पन्थाः ॥ ३ ॥

[3]आकर्ण्य तद्वचनमाकुलमानसापि निःश्वस्य साश्रुनयनापि समाहिता सा ॥
तस्मै प्रसिद्धपरमार्थफलप्रदाय सङ्कल्पितं स्वममलं कथयाम्बभूव ॥४॥

गुरुरुवाच —

[3]बाले त्वयाद्य तु सतीगमनं पवित्रं सङ्कल्पितं परमहं कथयामि किञ्चित् ॥
बालाविमौ तव वियोगममर्षयन्तौ आक्रोशनं प्रकुरुतो न शृणोषि किं तत् ॥५॥

[3]एकं कुलाश्रयममुं खलु सांयुगीनं मृत्युं गतं च तरुणं तनयं धरण्याम् ॥
दुःखेन दीर्णहृदयौ श्वशुरौ विलोक्य किं त्वत्सतीगमनमद्य फलप्रदं स्यात् ॥६॥

अहल्योवाच —

[3]सर्वान् मृतानिव परिप्लुतमानसांश्च त्यक्त्वा सुनिश्चिततयाप्युररीकृतं यत् ॥
श्रीमद्गुरो मम सतीगमनं स्वभर्तुर्मातुः पितुः कुलसमुद्धरणं करोति ॥ ७ ॥

लोकत्रयेऽद्धारकरं ममेदमभीष्टदं नैवमनिष्टमीष्टे ॥
सङ्कल्पितं तद्गुरुपादपद्मं सिद्धिं नयत्वेवमहं समीहे ॥ ८ ॥

१. वैतालीयवृत्तम् । २. शालिनीवृत्तम् । ३. वसन्ततिलकावृत्तम् । ४. इच्छामि ।

गुरुरुवाच—

सुतस्तवायं च सुता च बाले दीनाविमौ नैव तयोः शरण्या ॥
त्वया विना क्वापि मृगीव घोरे भ्रष्टाध्वनोः शावकयोररण्ये ॥ ९ ॥

अतिदीनरवं तयोरपि शृणुषेऽथापि मनाङ् न दूयसे ॥
विधिना हृदयं तवोदरे किमु तल्लौहरसेन निर्मितम् ॥ १० ॥

अहल्योवाच—

तद्रक्षका मे श्वशुराश्च सन्ति प्रेम्णादरेणाम्मदपेक्षयापि ॥
तद्रक्षणार्थं मम जीव एष सङ्कल्पितं नो विजहाति शुद्धम् ॥११॥

ईशोऽन्ननिर्मितिमहो प्रथमं विधाय जीवाननेकविधया ननु निर्मिमीते ॥
तज्जीवनाय भुवि नो पितृमात्रपेक्षा भर्त्रा सहैव गमनं च ततः करोमि ॥१२॥

गुरुरुवाच—

शास्त्रे नृणां निन्दित आत्मघातः स्त्रीणां निन्द्यः सोऽपि लोकेऽविशेषात् ॥
तस्मादन्वारोहणेऽद्य बाले सङ्कल्पोऽयं त्यज्यतेवच्चानिनिन्द्यः ॥ १३ ॥

स्वर्गाभिलाषस्तव वर्धमानो न मन्यतेऽसौ प्रतिषेधशास्त्रम् ॥
क्षुधातुरो हिंस्रपशुर्न वेत्ति द्विजं स्त्रियं वापि खगं मृगं वा ॥ १४ ॥

श्रुतौ हिरण्यप्रमुखैः प्रदानैः स्वर्गादिकं प्राप्यत एवमुक्तम् ॥
तदर्थमेषा वपुषो विनष्टिः स्वाज्ञानमेव प्रकटीकरोति ॥ १५ ॥

अहल्योवाच—

देहान्तरस्थो हि गुरोऽयमात्मा विनाशमाप्नोति कदापि नैव ॥
अध्यासतो देहजनुर्विनाशावात्मन्यथारोपयति स्म मूर्खः ॥ १६ ॥

यदैव भर्तुः सहधर्मिणी स्त्री जाता तदैवायमहो सुयोगः ॥
स्वर्गाभिलाषोऽस्य फलं न किन्तु सहैव वासोऽन्यदहं न मन्ये ॥ १७

१. वियोगिनीवृत्तम्। २. शालिनीवृत्तम्। ३. दशेनयागवत्।

असौ गुरो मे वपुषो विनाशः सोऽपीह दोषास्पदमेति नैव ॥
प्राक्कर्मभुक्त्यै तनुजन्मनाशौ मन्ये न दोषाय न वा गुणाय ॥ १८ ॥
प्राक्कर्मभोगाय पतिर्मृतो मे सतीगतिर्मेऽपि न किं तदर्था ॥
सर्वोऽपि जीवो यदि दिष्टभोक्ता कार्यो न केनापि तदन्तरायः ॥१९॥

लोके नरः शत्रुविनाशकामः स श्येनयागं कुरुते न चान्यः ॥
तथा न मेऽत्रानुगतिर्हि काम्या ततो भवन्तो न निषेधयन्तु ॥२०॥

आर्ते पत्यावार्तिमाप्नोति कामं हृष्टे हृष्टा प्रोषिते या कृशा स्यात् ॥
मृत्युं प्राप्ते या म्रियेतानुगन्त्री पातिव्रत्यं पालयामास सैव ॥ २१ ॥

[2]स्वरादि काम्यं फलमीहमानः स्वायुःक्षयं यः प्रकरोति जीवः ॥
दूष्यो भवेत् स प्रतिषिद्धकर्मा नाप्नोत्यमुत्रापि फलं च सम्यक् ॥ २२ ॥

गुरुरुवाच—

जीवन्नरो भद्रशतानि पश्येच्छ्रुतिर्जगावेवममूढकन्ये ॥
पत्या समं मा स्म गमस्त्वमद्य किं मृत्युनायुःक्षयकारिणा स्यात् ॥२३॥

श्रीमद्गुरोर्भाषितमर्थपूर्णं स्तोकं परं लोकहितार्थकारि ॥
मल्लारिराजोऽप्यतिदूनचेता आकर्ण्य चित्ते तदलं तुतोष ॥ २४ ॥

आत्मस्नुषायाः कठिनेऽपि चित्ते श्रीमद्गुरोर्भाषणवज्रमेव ॥
अनेकशास्त्रीयवचःप्रहारैः सङ्कल्पितं नाशयतीत्यवेदीत् ॥ २५ ॥

[3]श्रुत्वाथ तद्वचनमात्ममनःप्रतीपं भूपस्नुषापि सुदृढीकृतनिश्चयासीत् ॥
मन्ये विवेकिजनमान्यगुरूपदिष्टं न्युब्जे घटे जलमिवापतितं बभूव ॥ २६ ॥

अहल्योवाच—

श्रीमद्गुरो भवनदीपतिकर्णधार ब्रह्माङ्गणे कृतविहार समाधिकाले ॥
लोके जनं जडमतिं विषयप्रलब्धं किं भो निषेधसि विधेयपरोत्सुकं माम ॥२७॥

१. शालिनीवृत्तम्। २. स्वर्गलोकादि। ३. वसन्ततिलका।

मित्रद्रोही ब्रह्मघाती कृतघ्नः पापैरन्यैरन्वितो यत्पतिः स्यात् ॥
अन्वारोहे तेन साकं यदि स्त्री स्वर्गे लोकेऽरुन्धतीव प्रपूज्या ॥२८॥

मनुष्यजातिर्बहुभिः प्रयत्नैः संसारयात्रां विनिवारयित्री ॥
तयैव चेन्मोक्षफलं लभेत किं नश्वरैर्वैषयिकैश्च भोगैः ॥ २९ ॥

सर्वथा च मदभीष्टकारिणी तोषणी सततदूनचेतसः ॥
अन्वयत्रयहितैषिणी परा श्रीगुरो मम सतीगतिर्ध्रुवम् ॥ ३० ॥

पक्षिणी जगति कापि कपोती मज्जता स्वपतिना ज्वलितेऽग्नौ ॥
स्वर्गतिं च सह तेन गता सा बादरायणवचो न मतं ते ॥ ३१ ॥

सूनुर्नायमभिजातकुलेऽस्मिन् शङ्करस्य कृपया पतितास्मीति ॥
तत् सतीगमन एव मतिर्मे सर्वथाऽप्यनुमतिं प्रददातु ॥ ३२ ॥

गुरुरुवाच—

भार्या मृते भर्तरि भालभाग्यं भोक्तुं भवाब्धिं च तरीतुकामा ॥
सद्ब्रह्मचर्याचरणान्निजायुः सार्थं विदध्यान्मरणेन किं स्यात् ॥ ३३ ॥
भर्त्रा सहैव गमने निजजीवनस्य नाशो भवेद्यदि पुनः स तु दोष एव ॥
तद्ब्रह्मचर्यमधुना चरितं भवत्या युक्तं तपोभिरमलैः शमलं क्रियेत ॥ ३४ ॥

बाले मृतायां त्वयि सर्वहानिः संजीवितायां नृपतेश्च लाभः ॥
तस्मात्त्वया शेषमशेषमायुर्नेयं स्वदानैरमितैर्व्रतैश्च ॥ ३५ ॥

कवेरुक्तिः —

भर्त्रा सहैव गमने दृढनिश्चया सा भूपस्नुषा न च मनाक् स्खलिता बभूव ॥
मन्ये समाहितमतावथ बालिशे च चित्रं लघुर्भवति यत्र गुरूपदेशः ॥३६॥

१. रथोद्धतावृत्तम् । २. कुलत्रयहितैषिणी । ३. स्वागतावृत्तम् । ४. वसंततिलकावृत्तम् । ५. अलं—सम्पूर्णं शं-कल्याणं । ६. अल्पः पक्षे अनिष्टः ७. महान् पक्षे जडः ।

तत्रागतः पुनरहो श्वशुरो वचांसि बाढं निराशहृदयोऽपि वधूं बभाषे ॥
पाषाणमूर्तिघटकः पृथुभिः स्वटङ्कैर्भित्वा शिलां सुरुचिरावयवां करोति ॥३७

श्वशुरउवाच—

[२]बालिके मम कुलाम्बुधिमुक्ते त्वं सहाभिगममद्य करोषि ॥
त्वत्पुरो दृढशिलां विनिधाय हन्मि मस्तकमिमं मृतिमाप्तुम् ॥ ३८ ॥
[२]पुत्र एष तव बालिशराजो रक्षितुं भुवमिमां न समर्थः ॥
कृत्तमूलतरुवन्मम सर्वं जीवनं वितथमेव च तस्मात् ॥ ३९ ॥
[२]प्रार्थिता सकुतुकं त्वमभीक्ष्णं सिद्धवर्यगुरुभिः स्ववचोभिः ॥
नैव जीवसि धवादयि पश्चान्नैव शास्त्रवचनं मनुषेऽद्य ॥ ४० ॥
[२]प्राणिनश्च सकला मम राष्ट्रे मन्वते स्वजननीं भवतीं ये ॥
तान् विहाय गमनं कुरुषे चेदात्मनः सकलपुत्रविनाशम् ॥ ४१ ॥
गुरोरनुज्ञा श्रुतिमप्यपेक्ष्य च्छात्रस्य मान्या न च वै तदन्या ॥
सन्यासतः स्त्रीवरणं न वेत्सि ज्ञानेश्वरस्यात्र पिता प्रमाणम् ॥ ४२ ॥
माताश्रयः स्याज्जनके च रुष्टे तस्याश्च रोषे परमेश्वरः स्यात् ॥
श्रीमान् गुरुः स्यात् परमेशरोषे ततो न लोके किमपीह वेद्मि ॥ ४३ ॥
सङ्कल्पतः श्रीशगुरोरनुज्ञां मन्यस्व बाले गुरुपाददासि ॥
किं भूयसा मद्वचसा जगत्यां सञ्जीवनं मे त्वदधीनमास्ति ॥ ४४ ॥
तत्सर्वथा मा स्म गमः सती त्वं सञ्जीवय त्वच्छ्वशुरं प्रजां च ॥
सम्पादय त्वद्गुरुराजनिष्ठां पूर्णेन्दुगौराञ्च दिगन्तकीर्तिम् ॥ ४५ ॥
त्वज्जीवने जीवति राष्ट्रमेतत् त्वदत्यये नश्यति तत्क्षणं मे ॥
इतःपरं नो कथयामि तुभ्यं म्रियस्व वा पालय वा यथेष्टम् ॥४६॥
आयुः प्रजाश्वशुररक्षणगुर्वनुज्ञाः सर्वं त्यजस्यथ सतीगमनेन बाले ॥
मन्ये प्रमाणमपि वेदपुराणशास्त्रं धिक्कृत्य सौख्यदमहो न गतिं प्रयासि ॥४७

१. वसंततिलकावृत्तम् । २. स्वागतावृत्तम् ।

श्रुत्वा तदात्मश्वशुरस्य वाक्यं वह्निस्फुलिङ्गप्रभरोषयुक्तम् ॥
किं कार्यमित्यादिविचारशून्या मोहं जगाम क्षणमात्रमेषा ॥ ४८ ॥
मौनंभावमभजनं स च तस्याः श्रीगुरुः समवलोक्य धृताशः ॥
तन्मनो विपरिवर्तितुमाह गोपवद्विपिनवर्तिमहोक्षम् ४९ ॥

गुरुरुवाच —

बाले तुभ्यं मार्गमादर्शयेऽहं येन श्रेयः प्राप्नुयेऽन्ञ्जः परं त्वम् ॥
संसाराब्धेः पारमादर्शयन्तो जविानज्ज्ञान्मादृशाः प्रव्रजन्ति ॥ ५० ॥
ब्रह्मप्राप्त्यै ब्रह्मचर्यव्रतेन स्थित्वा जीवैश्चित्तशुद्धिर्विधेया ॥
तत् सर्वेषां साधनानां वरिष्ठं तस्मादन्यद्वालिकेऽहं न वेद्मि ॥५१॥

सहाग्निगमनादिदं स्ववपुषा नियम्यार्वनं
विधाय कुरु बालिके निखिलतीर्थयात्रादिकम् ॥
स्वराष्ट्रपरिपालनं सकलसाधुसन्तोषणं
दिगन्तरयशोध्वजं सुरुचिरं समारोपय ॥ ५२ ॥

बाले तवाश्रितमनोज्ञवपुर्विनाशः कार्यं मनागमनमेकमयं विधत्ते ॥
त्वज्जीवनं तु भवमोचनकार्यकारि लोकोपकारि सकलार्तिविनाशकारि ॥५३॥

सद्ब्रह्मचर्याचरणेन कुन्ती स्वराष्ट्रमुद्धृत्य दिवं जगाम ॥
धवस्य पश्चात्वमपीशसेवां विधाय निर्वाणसुखं लभस्व ॥ ५४ ॥
सद्ब्रह्मचर्याचरणाच्च भीष्मो लोकेषु सिद्धिं परमामवाप ॥
दिगन्तकीर्तिश्च निजायुषोऽन्ते सन्दर्शनं श्रीपरमेश्वरस्य ॥ ५५ ॥
सद्ब्रह्मचर्याचरणात्तथाक्का समर्थभक्ता किल वेणुमाता ॥
उभे स्त्रियौ सद्गतिमाप्नुतां ते गायन्ति तत्कीर्तिमहो कवीन्द्राः ॥ ५६ ॥
भर्तुः पश्चात् भूपतिश्रीशिवाजीमाता मान्या वीरसूः श्रीजिजाख्या ॥
भक्त्या पूज्यश्रीभवानीपदाब्जे भूयांसं सापि व्यतारीद्धवाब्धिम् ॥ ५७ ॥

१. स्वागतावृत्तम् । २. अरण्यमध्ये तिष्ठन्तं महावृषभ गृहमानेतुं यथा गोपः प्रभाषते तथेत्यर्थः । ३. शालिनी । ४. मारणेन । ५. पृथ्वी । ६. रक्षणम् । ७. वसंततिलका ।

त्रेतायुगे पङ्क्तिरथस्य[1] पश्चात्तिस्रः स्त्रियस्तस्य किलावशिष्टाः ॥
श्रीरामपादाम्बुजसेवनेन ध्रुवं व्रजन्ति स्म भवाब्धिपारम् ॥ ५८ ॥

विष्णु[2]स्मृत्यां साधने द्वे किलोक्ते तत्राद्यं तु ब्रह्मचर्यं परञ्च ॥
अन्वारोहो बालिके शान्तचित्ते तस्मादेतद्ब्रह्मचर्यं मतं ते ॥ ५९ ॥

सद्ब्रह्मचर्याचरणाभिधोऽयं वर्वर्ति लोके ननु कल्पवृक्षः ॥
काङ्क्षन्ति यद्यत्फलमत्र भक्ता ददाति तत्तत्सकलं हि बाले ॥ ६० ॥

भू[3]पतेः कुलवधूरयमात्मा व्योमवद्विभुरहो यदनन्तः ॥
तस्य नो गमनमागमनं वा नैवमेव जननं मरणं वा ॥ ६१ ॥

त्व[3]च्छरीरसहवर्तितयैव त्वत्पतेः सततमस्ति निवासः ॥
स्यात् कदापि तव नैव वियोगो नित्यसत्यपरमार्थविभुत्वात् ॥६२॥

त[4]तो भर्तृमूर्तिं स्वचित्ते विशुद्धां समग्रां च संस्थाप्य सानन्ददृष्ट्या ॥
गुरोः पादपद्मं प्रणम्यैव भक्त्या प्रमाणं वचः सा तदङ्गीचकार ॥ ६३ ॥

त[4]तो हृष्टचित्तः स मल्लारिभूपः समागत्य वध्वाननं तत्समीक्ष्य ॥
दरिद्रो यथा द्रव्यराशिं तथायं पुनस्तामहल्याञ्च किञ्चिद्बभाषे ॥६४॥

बा[3]लिके मम हृदब्जनिवासे पालिके सकलराष्ट्रधुरायाः ॥
हारिके मम च चित्तरुजाया धारिकेऽसि मम वंशतरोस्त्वम् ॥६५॥

प्रजाश्च[5] भवतीमिये निखिलराष्ट्ररक्षाक्षमां ।
दयार्द्रमनसं परां स्वजननीं दृढं मन्वते ॥
वदन्ति सकलैरहो सततमसदीयैश्शुभैः ।
करोतु तव शङ्करः शमनिशं स मृत्युञ्जयः ॥ ६६॥

[2]अम्बादासः श्रीगुरुर्धर्मराजः श्रीसावित्र्यै भर्तृदाने यथासीत् ॥
अद्य प्राप्ते मद्वधूप्राणदाने बाढं स्यान्मे शङ्करस्योपकारः ॥६७॥

१. दशरथस्य । २. शालिनी । ३. स्वागता । ४. भुजङ्गप्रयातम् । ५. पृथ्वी ।

ममभाग्यमिदं स्नुषा मदीया सहमृत्योरधुना निवर्तते स्म ॥
विजहौ स्वयमप्यहो प्रतिज्ञामिव कृष्णो निजपार्थजीवनाय ॥ ६८ ॥
पुत्रमृत्युभवदुःखपर्वतं तत्क्षणं समधिरुह्य भूपतिः ॥
श्रान्त एष समभूत्ततो वधूनाशनाय किमिवास्य जीविना ॥ ६९ ॥
बह्व्यो भार्यास्तस्य मल्हारिसूनोरन्वारोहं भर्तृचित्यां प्रचक्रुः ॥
यासां बुद्धिर्लोककार्येषु दक्षा नासीत्तासां वर्त्म किं दर्शयन्त्यः ॥७०॥
सहसा विनिवारितापि लोकैः कुशला तन्मरमा* च शिक्षितेव ॥
जनताहितकृत्यमनुपायाः प्रतिमैव प्रसभं चितां गता किम् ॥ ७१ ।
सोढ्वा भूपतिरेष दुःखमतुलं सत्पुत्रमृत्यूद्भवम् ॥
श्रीमत्सद्गुरुराजपूर्णकरुणाच्छायाश्रिता स्वस्नुषा ॥
संजीवत्यधुनेति भावितमना याहच्छिकं पर्वते ॥
माणिक्यं लभते क्वचित् परमथो सत्यं वचोऽमम्म मः ॥ ७२ ॥
ततो लोकाः सर्वे नृपतिसुतमृत्युं युधि भवं ॥
विदित्वा तत्रगुः परमथ च चक्रुर्विधिमहो ॥
नितान्तं दूनान्ता कथमपि ममदाय पितरं ॥
नृपालं संप्राप्ता निजपुरमहल्या कुलवधूः ॥ ७३ ॥
ततो गन्तुकामां वधूं स्वां विलोक्य क्रुधा भूपतिस्तां प्रतिज्ञां चकार ॥
खनिष्यामि दुर्गं समस्तं तदीयां गृहीत्वा मृदं क्षपयिष्येऽर्कपुत्र्याम् ॥७४॥
करिष्यामि युद्धं वधिष्यामि सैन्यं हनिष्यामि मल्लं नृपं सूरजाख्यम् ॥
वरिष्याम्यशक्यं जयं शात्रवेभ्यो गमिष्यामि शोकस्य पारं तदैव ॥७५॥
करिष्यामि वध्वा अहं शोकनाशं हरिष्यामि सर्वापदः शत्रुनाशात् ॥
करिष्यामि सत्यामिमां स्वप्रतिज्ञां भविष्यामि तर्ह्येव मल्लारिनामा ॥७६॥

इतिश्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते
श्रीमदहल्याचरिते सतीगमनपरावर्तनं नाम षष्ठः सर्गः।

१. वैतालीयम्। २. सहगमनादित्यर्थः। ३. शालिनी। ४. शार्दूलविक्रीडितम्।
५. शिखरिणी। ६. भुजंगप्रयातम्। ७. यमुनायाम्। ८. सूरजमल्ल। * शुनी।

# सप्तमः सर्गः ।

[1]ऊनान्तराशेषजनं तदिन्दुरं नीलाम्बुदाकाशमिवेन्दुमण्डलम् ॥
तत्र न्यवात्सीच्छ्वशुराश्रयेण सा स्तम्भाश्रयेणाभिनवेव वल्लरी ॥ १ ॥

[2]स्नुषामपि स्वां कलयन् स्वमात्मजं स्वराज्यभारं समुवाह पूर्ववत् ॥
भवे भृशं यः कुशलः स्ववस्तुषु शिष्टेन कार्यं कुरुते स्वसम्मतम् ॥ २

या पूर्वमासीत् पतिरागशीला सा साम्प्रतं प्राप्तविरागशीला ॥
प्रवृत्तिमार्गे परिवर्तितुं तां शनैःशनैरायतते स्म भूपः ॥ ३ ॥

स दण्डनीत्यां निपुणो यथासीत्तथा वधूं स्वां निपुणां चकार ॥
क्षिप्तो जले शार्कर एव खण्डो जलं समग्रं मधुरं करोति ॥ ४ ॥

सा राज्यतत्त्वं श्वशुरस्य सर्वं कुशाग्रबुद्ध्या कलयां चकार ॥
सच्छात्रबुद्धिश्चतुरोऽपि वेदान् सर्वाणि शास्त्राणि वशीकरोति ॥५॥

भूपोऽपि तस्याः स्वविधेयकर्मस्वाविष्टचित्तां सुदृढं विलोक्य ॥
हृत्तापदं स्वात्मजमृत्युदुःखं प्रत्यक्चकार प्रमुदं प्रपन्नः ॥ ६ ॥

लोकप्रियां तामपि सूक्ष्मबुद्धिं व्यवस्थितत्वादपि कार्यकर्त्रीम्
दृष्ट्वा परं कौतुकपूर्णचेता विश्रान्तिसौख्यं परमन्वभूत्सः ॥ ७ ॥

दयालुता दुर्गतदानशूरता श्रद्धालुता कर्मणि पापभीरुता ॥
कालज्ञता तद्वदहो सुदक्षता गुणास्तदङ्गे स्म वसन्ति सर्वदा ॥ ८ ॥

नव्या चिकीर्षा च महत्त्वकाङ्क्षा कार्योचितस्फूर्तिरिति प्रसिद्धाः ॥
शक्तीरिमास्तिस्र उदीरितास्ताः स्वाङ्गे स्नुषा सा वृणुते स्म नित्यम् ॥९॥

१. इन्द्रवंशा। २. वंशस्थ।

राज्यस्य कर्तुर्नृपतेः षडन्ये गुणाः प्रसिद्धा अपि दण्डनीत्याम् ॥
स्त्रीत्वात्किमस्यास्त इमे शरीरे साधर्म्यमाप्त्वा झटिति प्रसक्ताः ॥१०॥

नृपोऽपि मल्लारिरहस्यया युतः स्वराष्ट्रकार्यं सकलं चकार ह ॥
प्रयत्नशीलः पुरुषो मनीषया करोति कार्यं सफलं यथात्मनः ॥११॥

धर्मे विरुद्धानपि दीनचेतसो लोकान् स्वराष्ट्रे समतोषयत्सदा ॥
सा किंबहूक्तेन चकार भूपते राज्यस्मृतिं पुत्रमृतौ च विस्मृतिम् ॥ १२ ॥

वैधव्यदुःखानलदग्धचित्तया गन्धादिकादेर्विषयाद्विरक्तया ॥
आसक्तया लोकहिताय केवलं सन्तोषिताः सन्ततमात्मनः प्रजाः ॥१३ ॥

लोके प्रसिद्धस्य विरक्तमूर्तेरात्मानुरागो विषये विरागः ॥
अस्याः पुनश्चित्रमिदं विराग आत्मन्यभूद्वै विषयेषु रागः ॥ १४ ॥

स्वराज्यनौकावहने प्रवीणं शूरं परं स्वश्वशुरं च वृद्धम् ॥
विज्ञाय तस्याशयमाकलय्य चकार सर्वं निजराष्ट्रकार्यम् ॥ १५ ॥

मल्लारिरायस्य च सन्निधानादासीदहल्या कुशलाग्रगण्या ॥
मुक्ता हिरण्यस्य च सन्निधानात्स्वयं स्वमूल्यं परमादधाति ॥ १६ ॥

दीनेषु लक्ष्मीः कुशलेषु रम्या विद्वत्सु लोकेषु सरस्वती सा ॥
दण्ड्येषु काली च करालवक्त्रा दासीव साक्षाच्छ्रुगेपकण्ठे ॥ १७ ॥

या याचकानामिह कल्पवल्ली प्रजाजनानां जननी च साक्षात् ॥
या मन्त्रिसङ्घेषु च मन्त्रसिद्धिररुन्धती वा ललनासमाजे ॥ १८ ॥

या मल्लिका कोमलवस्तुषु स्वयं या शल्लिका शत्रुवपुःप्रवेशने ॥
या कोमलान्तःकरणा बुभुक्षिते या निष्ठुरा चोरजनेषु सर्वदा १९ ॥

१. राज्यकर्त्याः स्त्रीत्वात्षड्गुणा अपि स्त्रीत्वमापन्ना किमु इति चित्रम्।
२. देहे। ३. देशेषु।

या प्राड्विवेवाकासनसांस्थिता चेत्किं न्यायमूर्तिश्च पुरोऽवतीर्णा
दण्डप्रदाने सुरलोकतोऽसावालक्ष्यते श्रेष्ठजनैरहल्या ॥ २० ॥

मल्लारिरायः स्ववधूमहल्यां संस्थाप्य पुर्यां निजराष्ट्रकार्ये ॥
दिल्लीपुरीं शत्रुगणान्विजेतुं प्रागाच्च तत्पत्रमिह प्रमाणम् ॥ २१ ॥

[2]तस्मादहल्या कुशला स्वकार्येष्वेतन्न मिथ्या यदि जातितस्स्त्री ॥
गुणाः स्वपुण्येन यदि प्रपन्नाः स्त्रीत्वादि ते नैव विलोकयन्ति ॥२२॥

श्रीमच्छिवाजेरपि राज्यकर्तुर्माताजिजासीत्परमप्रतापा ॥
[3]ताराभिधा वा कुशला किमस्यां तयोर्गुणास्ते प्रकटीबभूवुः ॥ २३॥

तस्याश्च धैर्यादिगुणाः समस्ता सँलब्धमाना मनसि प्रसिद्धाः ॥
कार्यं स्वकीयं च यथानुरूपं चक्रुःकिमेतेऽतिकुतूहलेन ॥ २४ ॥

शस्त्राग्निचूर्णादिसमस्तवस्तुषु सैन्यव्यवस्थासु नियोजितापि च ॥
कौशल्यमत्रापि निदर्शयन्त्यसौ मल्लारिराजं समतूतुषत् परम् ॥ २५ ॥

शस्त्रादिसङ्घं विपुलं सुरक्ष्यं ग्वालेरपुर्यां न च निक्षिपामि ॥
संरक्षणायात्र तृणाद्यभावाद्ग्रामं सिरोंजाह्वयमाश्रयामि ॥ २६ ॥

आत्मस्नुषालेखमिमं समागतं संवाच्य सानन्दमनाः स भूपतिः ॥
मत्वा च तामात्मसुखप्रदायिनीं प्रत्युत्तरं तां विलिलेख तत्क्षणम् ॥ २७ ॥

तस्मात्परस्तान्निजराजधान्यां प्रस्थानमब्दीयकरग्रहश्च ॥
सैन्धव्यभागस्य च ताजपुर्याः संरक्षणं च त्वरया विधेयम् ॥ २८ ॥

राज्यव्यवस्थाप्यनुरूपरूपा सैन्यस्य सम्प्रेषणसंस्थिती च ॥
प्रामुख्यतस्तत्र विधावहल्याचातुर्यमेवान्यदहो न हेतुः ॥ २९ ॥

जाटस्य राज्यं ननु गोहदाख्यं निम्नंभवेद्धेति विचारणीयम् ॥
सैन्यादिसम्प्रेषणमात्मनोऽरीस्तानञ्जसा वापि पराजयेत ३० ॥

१. न्यायाधीश। २. मल्लारिरायस्य पत्रस्य प्रमाणतः। ३. श्रीराजारामस्य स्त्री ताराबाई। ४. आयत्तीभवेत्।

उत्साहवत्त्वात्सिध्यति कार्यमात्मनो युद्धप्रसङ्गान्न तथेति बालिके ॥
ज्ञात्वैव सर्वं कुरुते स्वमीप्सितं दक्षश्च मान्यः स च राष्ट्रकर्मणि ॥ ३१ ॥

क्वचिच्च सम्भाषणमर्थदानतः क्वचिद्द्विषोर्लुण्ठनदाहनादिकम् ॥
क्वचिद्धृतिः शत्रुपुरं जिगीषया क्वचिच्च दुर्गेषु पुरस्य वास्थितिः ॥ ३२ ॥

बलाबलाभ्यां क्व च सन्धिविग्रहौ क्वचिच्च कार्यौ महदाश्रयोऽपि वा ॥
सदा नृपाणां किल सौख्यदायिनी भवन्त्यमी नीतिगणैकरूपिणी ॥ ३३ ॥

त्वया स्वचित्ते सुविचारणीया नृपस्य का नीतिरनीतिरेवम् ॥
शास्त्रोक्तमार्गेण च वर्तमानः प्राप्नोति दोषान्न कदापि भूपः ॥ ३४ ॥

शस्त्राग्निचूर्णादिषु गोप्यवस्तुषु नान्यावलम्बीव तवास्तु वर्तनम् ॥
प्राणाः शरीरस्य परावलम्बिनः संरक्षणं तस्य विधीयतां कथम् ॥ ३५ ॥

कदाप्यविश्वस्तजनान्न विश्वसेत्कदापि नाज्ञैः कितवैः समं वसेत् ॥
नचातिगोप्यं कुत्रचित्प्रकाशयेन्न चाद्यकार्यं श्व इतीव योजयेत ॥ ३६ ॥

सिद्धं तवास्तां किल युद्धसाधनं नापद्यते वा सहसा तदत्ययः ॥
एवं हि सर्वत्र जनैः प्रभाष्यतां भूयोऽभिभाष्यं परमल्पदानकम् ॥ ३७ ॥

कर्तव्यमेवेति वदन्सदैव द्रव्यव्ययं नैव कदापि कुर्यात् ॥
स्वकार्यसिद्धिं मृदुभाषणेन संसाधयेद्धीरनराग्रगण्य ॥ ३८ ॥

सैन्यस्य संरक्षणमेव भूपतेर्लोके प्रसिद्धं हि जयस्य साधनम् ॥
शूरस्य तस्यापि बलादृते कथं शक्यो जयः शत्रुपुरेऽभिमानतः ॥ ३९ ॥

सैन्याद्विना शत्रुपराभवो न च द्रव्यादिलाभो न पराभवं विना ॥
द्रव्याद्विना नो निजराज्यरक्षणं तस्मात्कुरु त्वं विजयप्रदं तु तत् ॥ ४० ॥

१. इन्द्रवंशावृत्तम्। २. वंशस्थवृत्तम्। ३ इन्द्रवज्रावृत्तम्। ४ तस्य नाशः।

एकं हि शारीरबलं समीरितं शौर्यं द्वितीयं पुरतश्च वैरिणः ॥
विद्यात्तृतीयं समनीकिनीबलं[1] तद्वच्चतुर्थं बलमौलिकं[2] परम् ॥ ४१ ॥

बुद्धेर्बलं पञ्चममीरितं स्नुषे षष्ठं तथोक्तं बलमायुषः परम् ॥
एतानि षड् जाग्रति यद्बलानि वै विष्णुः स साक्षाद्विजयी भवेन्नृपः॥४२॥

यानगा[3] च पदगा द्विधा चमूर्यानतः स्वत इतीरितागमे ॥
रक्षतां च तृणधान्यदानतो योजिता च सकलार्थसाधिका ॥ ४३ ॥

नृपस्य[4] सेनाबलमेव मुख्यतो ध्रुवं यतः शत्रुपराजयो भवेत् ॥
परं त्वभेद्यं रिपुभिश्च भेदकैर्भवेत्तथैवावाहितं समाचरेत् ॥ ४४ ॥

रिपोर्बलं भेद्यमभेद्यमात्मनो यथा भवेन्नित्यमथ प्रयत्यताम् ॥
यथोपजापो रिपुनाशकारकस्तथेतरः कोऽपि न शास्त्रसम्मतः ॥ ४५ ॥

भेद[5] एव रिपुनाशकारकोऽभेद[6] एव निजराष्ट्रवर्धकः ॥
भेद[7] एव परमार्थसाधकः कल्पवृक्ष इव भूपतेस्ततः ॥ ४६ ॥

आस्तामिदं[8] प्रस्तुतलेखनीयो गान्धारभूपश्चतुरोऽब्ददाली ॥
अर्वाक् प्रवेष्टुं कुरुते प्रयत्नमुपेक्षितो रोग इवान्तकारी ॥ ४७ ॥

तत्र[9] प्रहीष्ये स्वनजीबखानं साम्ना शनैस्तं च वशीकरिष्ये ॥
शूरश्च सामादिभिरप्युपायैः स्वार्थं हि संसाधयते रिपुभ्यः ॥ ४८ ॥

स्वाभीप्सितं कर्तुमहं समीहे यत्नं महान्तं विदधे तथैव ॥
यत्नो मनुष्यस्य करे स्थितस्तत्फलं करे सन्ततमीश्वरस्य ॥ ४९ ॥

पत्रोत्तरं यावदहं सुपुत्रि गङ्गानदीतीरनिवासमीहे[10]
विज्ञाय सन्धि रणमप्यताहो यथा स्वमग्रे विनिवेदयिष्ये ॥ ५० ॥

१. बलवत्सैन्यबलम् । २. अस्त्रादिनिर्मितम् । ३. रथोद्धतावृत्तम् । ४.वंशस्थवृत्तम्
५. भेदः । ६. परस्परं विरोधः अभेदः—परस्परैक्यम् । ७. शत्रुनाशः
८. उपजातिवृत्तम् । ९. इन्द्रवज्रावृत्तम् । १० इच्छामि ।

कार्यादतो हि प्रहितानि तुभ्यं पत्राणि लब्धानि नवाखिलानि ॥
नातः परं सैन्यमिह प्रदेयं फलं विना नैव कृतिर्विधेया ॥ ५१ ॥

विश्वस्तसैन्यं स्वमर्मोपमास्यतां विश्वस्तसङ्घो हि नृपस्य रक्षकः ॥
त्यक्त्वा स्वदुर्गावनमेव शत्रुषु धावेत्स मूढः प्रतिपादितो बुधैः ५२ ॥

विश्वस्तसैन्यं न किल प्रतीयतां मार्गोऽपि नैवात्र सुखावहो यतः ॥
ग्वालियरग्रामः कियतां चतुर्दिनं साकं जनैस्तत्र मयागमिष्यते ॥ ५३ ॥

अस्मिन् वर्षे गोहदानां जनानां कर्तव्या मे सर्वथा हानिरेव ॥
तत्र स्थित्वा नालिकादीन् सगोलान् सैन्यं चापि प्रेषय त्वं यथा स्वम् ॥५४॥

अयि गोहदनामको जनः पुरतः स्निग्धवरोऽन्ततो रिपुः ॥
अथ तस्य पराभवो वरो तदुपेक्षा न हितावहा क्वचित् ॥ ५५ ॥

अल्पोऽपि शत्रुर्न च हेलनीयो बालोऽप्युपेक्ष्यो न भुजङ्गपुत्रः ॥
अग्रे स्थितो वन्यमृगेन्द्रशावः कुर्यान्न किं वारणगण्डभेदम् ॥ ५६ ॥

यद्यर्थसिद्धिः कलहं विनाय नो तर्हि साम्ना परिचारणीयम् ॥
सर्वैरुपायैर्निजकार्यसिद्धिः साध्या नृपेणेति च राजनीतिः ॥ ५७ ॥

विद्यामदः शौर्यमदोऽभिजातमदस्तथा मानबलश्रियां मदः ॥
बाले वधू कीर्तिमदप्रगण्य शौर्योऽप्यमी राजनि नैव सन्तु ॥ ५८ ॥

धैर्येण बुद्ध्या बलसाहसाभ्यां पराक्रमेणार्जवतोऽपि बाले ॥
कार्यं च संसाधयतुं स्वकीयं सहजोऽस्ति दृष्ट्या खलु तत्र साध्यम् ॥ ५९ ॥

कस्याप्यनिष्टं न वदेत्सुखेन कस्याप्यनिष्टं न करेण कुर्यात् ॥
छिद्रं न कस्यापि विलोकयेद्वा नाज्ञा वरिष्ठस्य कदाप्यमान्या ॥ ६० ॥

१. इन्द्रवंशावृत्तम् । २. शालिनीवृत्तम् । ३. वियोगिनीवृत्तम् ।
४. इन्द्रवज्रावृत्तम् । ५. कुलकः । ६. उपजातिवृत्तम् ।

लोकेष्वसत्कार्यनियोजिना नो संमान्यतां यद्यपि वा महान्सः ॥
बालश्च सत्कार्यनियोजिता चेत्संमान्यतां सद्द्रविणप्रदानैः ॥ ६१ ॥

कासीदनामा वदति स्म मह्यं गढी जिता काचन गोहदानाम् ॥
ससीसगोलाभिरमूल्यधैर्यैर्यधैश्च साकं पृथुनालिकाभिः ॥ ६२ ॥

वृत्तं समाकर्ण्य जयावहं तज्जातोऽहमानन्दसमुद्रमग्नः ॥
उत्साहशक्तिस्त्वमलौकिकी मे देहाद्विभिन्नेति विचित्रमेतत् ॥ ६३ ॥

सन्धिर्विधेयो बलवत्सपत्नैर्युद्धं विधेयं हि समेन शक्त्या ॥
यानं विधेयं किल दुर्बलेऽरौ मुहुः सदैवाश्रयणीय एव ॥ ६४ ॥

बहुष्वमित्रेषु तदात्मगुप्तिः साधारणेऽरौ तु भयप्रदानम् ॥
नतिर्बलिष्ठेष्विति राजनीतिर्बाले सदैवात्मनि चिन्तितव्या ॥ ६५ ॥

कृतेऽपि सन्धौ न च विश्वसेदरौ वधूस्त्वमित्येव वदामि नान्यथा ॥
प्रदर्श्य विश्वासमथोऽमुरगाधिपो निजघ्निवान् वृत्तमहो पुरा किल ॥ ६६ ॥

विध्वस्तसेनाधिपमाकलय्य तस्मै प्रदेयो निजशस्त्रसङ्घः ॥
हन्याज्जनान् गोहदपार्ष्णिभूताञ्जानीहि तन्मे महते शिवाय ॥ ६७ ॥

स्नुषा यदि त्वं परमार्थतो मे सुतस्य कार्यं कुरुषे सुनस्तत् ॥
सुतस्नुषा त्वं च ममैकनिष्ठं चकार शम्भुर्हि विचित्रमेतत् ॥ ६८ ॥

सामोपायः सर्वथा योजनीयो नोचेद्दानं योजनीयं सुयुक्ति ॥
भेदो युक्तः सर्वथा शात्रवाणां प्राणानां चेत् संशये दण्डनं स्यात् ॥ ६९ ॥

प्रेम्णा प्रजापालनमात्मनः सदा दण्डं च तस्यां न कदापि योजयेत् ॥
साम्ना च दानेन च पालनं महद्राज्ञः किलात्यन्तहितावहं भवेत् ॥ ७० ॥

१. उपजातिवृत्तम् । २. मनं भागो वा । ३. इन्द्रवज्रावृत्तम् । ४. रक्षणम् ।
५. वंशस्थवृत्तम् ६. उपेंद्रवज्रावृत्तम् । ७. शालिनीवृत्तम्. ८. इन्द्रवंशावृत्तम् ।

केनोपायेनापि ते वर्धनीयं राष्ट्रं बालेऽथात्मना सा रमेतन् ॥
पाल्यं राष्ट्रं पुत्रवच्चेत् गुप्तं लोके शूरः कीर्तिमान् पुण्यवान् सः ॥ ७१ ॥

तस्माद्बाले राष्ट्रकार्यं ममैतत् सर्वस्वं मे प्राणतोऽपि प्रियं च ॥
धैर्यात्मिका तद्धुरं त्वां वहन्तीं दृष्ट्वा मन्ये शङ्करस्यानुकम्पाम् ॥ ७२ ॥

मल्लारिसूनुर्वनिता निखिलप्रजानां
चातुर्यधैर्यकरुणादिगुणैः प्रियासीत् ॥
मोदाभिशायिकरशारदपूर्णिमेन्दोः
सच्चन्द्रिकाभिधवलेव च कोरकाणाम् ॥ ७३ ॥

तस्याः प्रगल्भमतिगूढविचारयुक्तं
लेखं विलोक्य स नृपो मुदितो बभूव ॥
सन्मन्त्रिणं च निजराष्ट्रहितैकदक्षं
लब्ध्वा भवेज्जगति को न तथा न जाने ॥ ७४ ॥

साङ्ख्ये यथा प्रकृतिरेव समस्तकर्त्री
निर्लिप्त एव पुरुषोऽम्बुजपत्रवत्सः ॥
भूपोऽयमास खलु तथा निखिलप्रपञ्चे
हेतुः स्नुषाऽस्य सुखदा प्रकृतिर्यथेयम् ॥ ७५ ॥

**मल्लारिरुवाच —**

धन्यासि सर्वजननीवनितासु बाले
मान्यासि राज्यनिपुणेषु जनेषु सत्यम् ॥
अन्या न मे खलु दृशो विषयस्तथासीत् —
मन्ये सदाश्रयपदं भवतीं न चान्याम् ॥ ७६ ॥

१. शालिनीवृत्तम् । २. वसन्ततिलकावृत्तम् । ३. साङ्ख्ये। साङ्ख्यशास्त्रे युद्धशास्त्रे च । ४. प्रकृतिः — साङ्ख्यशास्त्रोक्ता अमात्यमण्डलं प्रजाश्च ।

लोकेष्वसत्कार्यनियोजिता नो संमान्यतां यद्यपि वा महान्सः ॥
बालश्च सत्कार्यनियोजिता चेत्संमान्यतां सद्द्रविणप्रदानैः ॥ ६१ ॥

कासीदनामा वदति स्म मह्यं गंढी जिता काचन गोहदानाम् ॥
ससीसगोलाभिरमूल्यधैर्यैर्योधैश्च साकं पृथुनालिकाभिः ॥ ६२ ॥

वृत्तं समाकर्ण्य जयावहं तज्जातोऽहमानन्दसमुद्रमग्नः ॥
उत्साहशक्तिस्त्वमलौकिकी मे देहाद्विभिन्नेति विचित्रमेतत् ॥ ६३ ॥

संन्धिर्विधेयो बलवत्सपत्नैर्युद्धं विधेयं हि समेन शक्त्या ॥
यानं विधेयं किल दुर्बलेऽरौ सुहृत्सदैवाश्रयणीय एव ॥ ६४ ॥

बहुष्वमित्रेषु तदात्मगुप्तिः साधारणेऽरौ तु भयप्रदानम् ॥
नतिर्बलिष्ठेष्विति राजनीतिर्बाले सदैवात्मनि चिन्तितव्या ॥ ६५ ॥

कृतेऽपि सन्धौ न च विश्वसेदरौ वधूस्त्वमित्येव वदामि नान्यथा ॥
प्रदर्श्य विश्वासमथोऽसुराधिपो निजघ्निवान् वृत्तमहो पुरा किल ॥ ६६ ॥

विश्वस्तसेनाधिपमाकलय्य तस्मै प्रदेयो निजशस्त्रसङ्घः ॥
हन्याज्जनान् गोहदपार्ष्णिभूताञ्जानीहि तन्मे महते शिवाय ॥ ६७ ॥

स्नुषा यदि त्वं परमार्थतो मे सुतस्य कार्यं कुरुषे सुनस्तत् ॥
सुतस्नुषा त्वं च ममेकनिष्ठं चकार शम्भुर्हि विचित्रमेतत् ॥ ६८ ॥

सामोपायः सर्वथा योजनीयो नोचेद्दानं योजनीयं सुपुत्रि ॥
भेदो युक्तः सर्वथा शात्रवाणां प्राणानां चेत् संशये दण्डनं स्यात् ॥ ६९ ॥

प्रेम्णा प्रजापालनमात्मनः सदा दण्डं च तस्यां न कदापि योजयेत् ॥
साम्ना च दानेन च पालनं महद्राज्ञः किलात्यन्तहितावहं भवेत् ॥ ७० ॥

१. उपजातिवृत्तम् । २. सैन्यं भागो वा । ३. इन्द्रवज्रावृत्तम् । ४. रक्षणम् ।
५. वंशस्थवृत्तम् ६. उपेंद्रवज्रावृत्तम् । ७. शालिनीवृत्तम्. ८. इन्द्रवंशावृत्तम् ।

केनोपायेनापि ते वर्धनीयं राष्ट्रं बालेऽथात्मनः सारमेतत् ॥
पाल्यं राष्ट्रं पुत्रवद्येन गुप्तं लोके शूरः कीर्तिमान् पुण्यवान् सः ॥ ७१ ॥

तस्माद्बाले राष्ट्रकार्यं ममैतत् सर्वस्वं मे प्राणतोऽपि प्रियं च ॥
धैर्यात्प्रेम्णा तद्धुरं त्वां वहन्तीं दृष्ट्वा मन्ये शाङ्करम्यानुकम्पाम् ॥ ७२ ॥

मल्लारिसूनुर्वनिता निखिलप्रजानां
चातुर्यधैर्यकरुणादिगुणैः प्रियासीत् ॥
मोदातिशायिकरशारदपूर्णिमेन्दोः
सच्चन्द्रिकातिधवलेव च कोरकाणाम् ॥ ७३ ॥

तस्याः प्रगल्भमतिगूढविचारयुक्तं
लेखं विलोक्य स नृपो मुदितो बभूव ॥
सन्मन्त्रिणं च निजराष्ट्रहितैकदक्षं
लब्ध्वा भवेज्जगति को न तथा न जाने ॥ ७४ ॥

सांख्ये यथा प्रकृतिरेव समस्तकर्त्री
निर्लिप्त एव पुरुषोऽम्बुजपत्रवत्सः ॥
भूपोऽप्ययं खलु तथा निखिलप्रपञ्चे
हेतुः स्नुषाऽस्य सुखदा प्रकृतिर्गरीयसी ॥ ७५ ॥

मल्लारिरुवाच —

धन्यानि सर्वजननाविनितासु बाले
मान्यासि राज्यनिपुणेषु जनेषु मेऽद्य ॥
अन्या न मे खलु हशो विषयस्तथासीत्—
मन्ये मदाश्रयपदं भवतीं न चान्याम् ॥ ७६ ॥

१. शालिनीवृत्तम् । २. वसन्ततिलकावृत्तम् ३. शाङ्करं साङ्ख्यशास्त्रं युद्धशास्त्रं च । ४. प्रकृतिः—साङ्ख्यशास्त्रोक्ता अमात्यमण्डलंप्रजाश्च ।

[1]मम निखिलगृहेषु त्वां विलोक्याहमद्य
परमकुशलबुद्धिं सर्वथा कार्यकर्त्रीम् ॥
सकलविषयभोगेष्वेकनिर्वाणसौख्यं
तदपि न बहु मन्ये त्वामपेक्ष्याद्य सत्यम् ॥ ७७ ॥

एका मूर्तिर्दृश्यते मेऽद्य राष्ट्रे योग्या बाले रक्षणे वर्धने वा ॥
तस्मात्सर्वं तेऽर्पयित्वाद्य मुक्तो भोक्ष्ये प्रीत्या पूर्णविश्रान्तिसौख्यम् ॥७८॥

[2]न च मत्प्रियकारिणी तथा न च मद्राष्ट्रधुराश्रया तथा ॥
न च मद्वशवर्तिनी तथा भवतीवेति समाहितोऽभवम् ॥ ७९ ॥

[3]अये संसारेऽस्मिन् चतुरजगदीशेन मुखतः ॥
प्रसिद्धे द्वे शक्ती स्वपदनतपार्थाय कथिते ॥
तदाद्या योगाख्या मयि सुदृढदेहे च निहिता
परा त्वय्येवेति ध्रुवमुकलयेऽहं कुलवधूः ॥ ८० ॥

इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते
श्रीमदहल्याचरिते राजधर्मशिक्षणं नाम सप्तमः सर्गः ।

१. मालिनीवृत्तम् । २. वैतालीयवृत्तम् । ३. शिखरिणी वृत्तम् ।
४. अलब्धस्य लाभो योगः, द्रव्यादिसम्पादनम् । ५. लब्धस्य परिपालनं क्षेमम् ।

# अष्टमः सर्गः ।

विश्रुतो हि भुवि मालवदेशो मुख्य एव धनधान्यसमृद्ध्या ॥
तत्र मल्लरिपुरास्त जनानां कल्पवृक्ष इव सर्वहितैषी ॥ १ ॥

शूर एष निखिलेषु नृपेषु राष्ट्रक्षणविधावपि मुख्यः ॥
भूयसा किमु स मत्तगजेन्द्रस्तत्पुरः स्युरपरे करिशावाः ॥ २ ॥

औत्तरेषु सकलेषु नृपालेष्वग्रणीरपि सहायकरेषु ॥
बाजिरावनृपतेरिव नित्यं प्रीतिदः स खलु मौक्तिकहारः ॥ ३ ॥

रोहिलैश्च रिपुभिः सह युद्धं शूरवर्यमरहट्टजनानाम् ॥
सम्बभूव, किल तत्र नृपोऽसावद्भुतां चतुरतां च चकार ॥ ४ ॥

एकतः समवबध्य पशूनां दीपिका महति शृङ्गसमूहे ॥
अन्यतस्तरुलतास्वयमन्यां द्रष्ट्रलक्षितदिशं च जगाम ॥ ५ ॥

दीपिकाश्च विपुला अवलोक्य धावितं बलमिदं हि रिपूणाम् ॥
आकलय्य परिवृत्य हि तस्मादन्यतस्तमजयत्स नरेन्द्रः ॥ ६ ॥

अन्यदापि बहुभिः समुपायैः शत्रुसङ्घमथ सर्वमजैषीत् ॥
प्राप्तसङ्कटविनाशककार्येष्वीदृशो जगति कोऽपि न दक्षः ॥ ७ ॥

पूर्वमेव स महानभिमानी मन्यते स्म न च कञ्चन शूरम् ॥
बाजिरावसुतमप्यवनीपं किं पुनस्तु जगतीतरभूपान् ॥ ८ ॥

शौर्यशक्तिमद एव जगत्यां श्रेष्ठतां परमुपैति मदेषु ॥
शौर्यशक्त्युभयमप्यतिमात्रं विद्यते स्म नृपमल्लरिपौ तत् ॥ ९ ॥

१. स्वागतावृत्तम्। २. साहाय्यकरेषु ।

संविधाय समराणि बहूनि सर्वदा विजयते स्म रिपून्सः ॥
पार्वतीपतिपुरो विजयस्ताच्चित्रमस्य सततं करगामी ॥ १० ॥

यस्य सैन्यमभितो रिपुनाशे सन्ततं प्रयतते स्म ततः स्यात् ॥
भूभृतो विजय, एष विचित्रमेक एव बलवान् विजयी वा ॥ ११ ॥

प्राणिनो विनिपतन्ति च यस्मिञ्छत्रुभिः सह मृधे क्रियमाणे ॥
पानिपत्विति रणाङ्गणमस्मिन् कौरवा अपि शुभां गतिमापुः ॥ १२ ॥

मल्लशत्रुरपि तत्र गतोऽन्यैर्मन्त्रिभिश्च बहुभिः सह जेतुम् ॥
दुर्जयानपि परान् यवनाँस्तानर्प्पयासुतमुखैर्विनियुक्तैः ॥ १३ ॥

नास्ति तत्र न च कश्चन धीरो नास्ति तत्र न च कश्चन शूरः ॥
नास्ति तत्र न च कोऽपि बलीयान् दर्शितोऽपि न च नेति तथैकः ॥ १४ ॥

नास्ति तत्र न च कोप्यवधानी नास्ति तत्र न च कोऽपि जयार्थी ॥
नास्ति तत्र न च युद्धपटुर्वा नास्ति तत्र न च कोऽपि विदग्धः ॥ १५ ॥

तत्र सर्वयवनाः खलु नागाः पन्तभूपतिमुखाश्च मृगेन्द्राः ॥
पानिपत्यथ वनेऽप्यतिघोरे प्रापतन्समुदिता इव योद्धुम् ॥ १६ ॥

तत्र घोरमभवत्किल युद्धं रोमहर्षणकरं किमपूर्वम् ॥
शस्त्रतः सकलगात्रविभेद्यमन्ततोऽपि रविमण्डलभेदि ॥ १७ ॥

मन्त्रिणश्च बहवः सकुटुम्बाः प्राव्रजन् रिपुगणैः सह योद्धुम् ॥
कार्य एव सकलै रिपुनाशः स्वस्य वाथ शरणीकरणीयः ॥ १८ ॥

भक्ष्यतां रिपुगणोऽप्यतिशूरो रक्ष्यतामतिशुचिर्नृपकीर्तिः ॥
बीजमत्र सकला पृथिवीयं हैन्दवीपदयुता करणीया ॥ १९ ॥

१. अर्जुनः पक्षे जयः। २. युद्धे। ३. सदाशिवरावभाऊ पेशवे। ४. धृतकवचः।

शीलवानयमथ स्थविरोऽपि राजभिस्तदखिलैः सकुटुम्बैः ॥
योजितः स्वसकलाप्तजनानां रक्षणे स नृपमल्लविपक्षः ॥ २० ॥

सत्वरं तदवरोधजनानां रक्षणाय परिवृत्य समीकात् ॥
भूपकार्यकरणं यदवश्यं प्राव्रजत्किमु ततो निजदेशम् ॥ २१ ॥

पन्तभूपतिवचः परमार्थं मन्यते स्म गुरुवाक्यवदार्यम् ॥
मल्लशत्रुनृपतिः खलु युक्तं सेव्यतन्त्रमिह सेवकवृत्तम् ॥ २२ ॥

पेशवेप्रमुखमन्त्रिजनैस्तैर्न श्रुतं वचनमस्य हितार्थम् ॥
तेन तेऽपि समराङ्गणशूरास्तद्दिने किमु पराजयमापुः ॥ २३ ॥

वासरैः कतिपयैः पुनरेष राघवेण सह मन्त्रिवरैश्च ॥
मल्लशत्रुरगमत्सह नप्त्रा वैभवं प्रथयितुं किमुदीच्याम् ॥ २४ ॥

दैवदुर्विलसितं ननु भोक्तुं रोगपीडितवपुः समभूत्सः ॥
अध्वनीति गतवान् समवाप्तुं वार्त्ततामलमपत्तननाम ॥ २५ ॥

कर्णशूलमभवत्किल तत्र तेन सोऽथ हृदयेऽप्यतिदूनः ॥
मन्यते स्म कुरुते मनुजो यदन्यथा फलति तन्नियतिः किम् ॥ २६ ॥

पुत्रनाशकरदुर्गविनाशो नीचशात्रवफिरङ्गविघातः ॥
इष्टमेतदुभयं किल तस्य साधितं न तदभूदिति दुःखी ॥ २७ ॥

तस्य मृत्युभयमत्र न किञ्चिद्धर्ममेव सकलं तदभीष्टम् ॥
शूर एव मनुते निजजीवादिष्टमेव निजकार्यमहत्त्वम् ॥ २८ ॥

कार्यमेतदुभयं परिशेष्य मल्लशत्रुरपि चान्तकवश्यः
सम्बभूव सकलान्निजनिष्ठं निर्भयत्वमिव दर्शयितुं सः ॥ २९ ॥

१. युद्धात्। २. आरोग्यम्। ३. असाध्यरोगग्रस्त इत्यर्थः

एक एव स महादाजि 'शिन्दे' पुत्रजेन सह तत्सविधेऽभूत् ॥
सर्वमेवकजनैः सहसोऽपि दुःखितः समभवच्च तुकोजी ॥ ३० ॥

आत्मपौत्रमिममात्मतुकोजिहस्त एव स समर्पयति स्म ॥
तस्य रक्षणविधौ न तदन्यश्चेति किं निगदितुं निजराष्ट्रे ॥ ३१ ॥

तुकोजी उवाच—

सेवकोऽस्मि भवदङ्घ्रिसरोजे किं प्रतीपमिव तात विधत्से ॥
आत्ममूर्ध्नि तव पोतकरोऽस्तु युक्तमीशकरुणा निजभक्ते ॥ ३२ ॥

मल्लारिरुवाच—

सेवकस्त्वमपि बाल तुकोजिन् राष्ट्ररक्षणविधावसि शक्तः ॥
नेदृशोऽस्ति कुशलो मम राष्ट्रे कीर्तिमेव विमलां मम रक्षेत् ॥ ३३ ॥

तस्मात् पालयस्व रिपुतो मम राष्ट्रं वर्धयस्व च शनैर्मम कीर्तिम् ॥
सान्त्वयस्व सुहृदं सुतकान्तां प्रीणयस्व पुरराष्ट्रजनांश्च ॥ ३४ ॥

इत्युवाच सकलेषु रुदत्सु श्रोतृराघवमुखेषु जनेषु ॥
तत्क्षणं स नृपमल्लविपक्षः कालपाशवशतां समवाप ॥ ३५ ॥

दुःखिताः समभवन् सकलास्ते पेतुरेव धरणीतलभागे ॥
वज्रपातमधिगम्य महान्तः पादपा इव झटित्यटवीषु ॥ ३६ ॥

वृत्तमेतदवगम्य सुशीला कर्णशूलमिव तादृगहल्या ॥
मूर्च्छिता क्षणमभूच्च सखीभिः सान्त्विताऽपि च पुनः प्ररुरोद ॥३७॥

अहल्योवाच —

संसृतौ पतिपदं वनितायाः सौख्यसागर इति प्रथितं यत् ॥
दैवदुर्विलसितेन तदा तन्नीतमित्यनिशमस्म्यतिदूना ॥ ३८ ॥



सुभेदारश्रीमल्हाररावहोळकराः ।

साम्प्रतं मम च स श्वशुरोऽपि कालभक्ष्यमभवात्किल शूरः ॥
सान्त्वयन् मम पितेव सदा यः शिक्षयन् गुरुरिव प्रतिघस्रम् ॥ ३९ ॥

किं विधेयमधुनान्धकशत्रो[1] सत्यमन्धतमसे च भवेऽस्मिन् ॥
नो सुखं, सदुपदेशविधाता, नाश्रयोऽपि मम सङ्कटकाले ॥ ४० ॥

तत्र सर्वमकरोत्किल नप्ता शास्त्रतः स च तदुत्तरकार्यम् ॥
वायसस्तु दशमेऽहनि पिण्डे स्पर्शमेव न चकार चिराय ॥ ४१ ॥

राष्ट्रपालनविधौ चतुरोऽसौ संस्मृतावपि तथैव तुकोजी ॥
तत्करार्पितजलेन स आसीत्स्पृष्ट एतदिति दृष्टमशेषैः ॥ ४२ ॥

शास्त्रसम्मतिविधौ व्यवहारे राजनीतिविषये निपुणाथ ॥
राष्ट्ररक्षणकृते निजपुत्रमासनस्थमकरोत्तमहल्या ॥ ४३ ॥

तत्सुतोऽप्यसितवर्त्मसहायो[2] जिह्मगैश्च[3] परिवेष्टितकायः ॥
नीलकण्ठ इव शुद्धहिमांशोर्लेखयार्पि विबभौ स जनन्या ॥ ४४ ॥

ब्राह्मणान् विविधदाननिमित्तं प्रत्यहं निजगृहे ह्वयते स्म ॥
सा, तदात्वमतिपीडयति स्म तान् सुतो विविधवृश्चिकदंशैः ॥ ४५ ॥

लोकपीडनकरीं सुतवृत्तिं तां विलोक्य हृदयेऽतिशयेन ॥
दुःखिता समभवत्तदहल्या मूर्धशूलमिव चानुभवन्ती ॥ ४६ ॥

एक एष कुलरक्षणतन्तुः सोऽपि दुःखदवरो मतिहीनः ॥
दीपिकाजनिरिवासितधूमो लोहगोल इव वा वसुमत्याः ॥ ४७ ॥

शुद्धसत्वगुणवृत्तिरियं वा तत्र तामसगुणस्तनयोऽसौ ॥
शुद्धवृत्तिरपि मानसहंसी तत्र वायस इवैष बभूव ॥ ४८ ॥

मूर्तकीर्तिरथवेयमहल्या तत्कुलेषु तनयो हि कलङ्कः ॥
रंगवल्लिरिव किं शुचिरूपा पुत्र एष किल कज्जलबिन्दुः ॥ ४९ ॥

१. हे शंकर। २. अग्निसहायः नीलकण्ठः पक्षे कुत्सितो मार्गः आचरणं येषां ते सहायाः यस्य। ३. सर्पैः पक्षे कुटिलैः।

चन्द्रिकेयमथ चन्द्रमसो वा कृष्णसार इव तत्र सुतोऽयम् ॥
वर्ण्यतां च बहुना वचसा किं सूनुरेष निजमातृविरुद्धः ॥ ५० ॥

जन्म निःस्वसदने नृपभार्या तद्वियुक्तिरथवाल्पदिनेषु ॥
दुष्ट एष तनयोऽत्र तु बीजं दैवदुर्विलसितं न किलान्यत् ॥ ५१ ॥

रूप्यतन्तुपटनिर्मितिकारी कोऽपि तत्र नगरे वसति स्म ॥
नित्यमेत्य किल सौधभुजिष्यां हन्त कामुकमना उपभुङ्क्ते ॥ ५२ ॥

तेन तप्तहृदयोऽभवदस्याः सूनुरप्यमितबालिशकृत्यः ॥
रक्षकैरथ तया स च बन्दीकारितो मृदुहृदापि जनन्या ॥ ५३ ॥

तं कुविन्दमथ मार्गयमाणो मूर्खराजनृपखण्डुसुतोऽपि ॥
भक्षयँश्च दशनोष्ठमवात्सीद्भन्तुकाम इव रुद्धजलौघः ॥ ५४ ॥

एकदा बहिरहो समवाप्तं तं विलोक्य गतवांस्त्वरयैव ॥
बालसिंह इव कुञ्जरशावं सञ्जघान खरखड्गनखैश्च ॥ ५५ ॥

यस्य नास्ति निजबुद्धिलवोऽपि तस्य किं बत परासुविचारः ॥
तं नरं कृतबहुप्रतिकारं मुञ्चति स्म न च खण्डुजिसूनुः ॥ ५६ ॥

यं विनैव हतवान् खलु हेतुं तत्क्षणं स च बभूव पिशाचः ॥
भूपपुत्रमपि पीडयितुं तं किं बभूव करसंयतसूलः ॥ ५७ ॥

जीवनाशफलकां परपीडां यां हठात्प्रकुरुते यदि जीवः ॥
तं परेत्य यदि पीडयतीह न्याय्यमेव न च तत्त्व विचित्रम् ॥ ५८ ॥

येन यो हि हत एवमनागाः पीड्य एव स कदापि न मोच्यः ॥
तत्त्वमेतदनिशं नृपसूनोर्दर्शयन्निव तनौ स बभाषे ॥ ५९ ॥

मारितोऽहमधुना भवता यद्धन्मि गोपितमथापि भवन्तम् ॥
मारिकामपि मनेरपि कृत्यां नाशकन्न तदभक्तिम चक्रम ॥ ६० ॥

१. 'जर' इति महाराष्ट्र्याम्। २. तन्तुवापः।

मोचयेऽहमपि किञ्चिदुपायैस्त्वां कदा न शनशो निहितैस्तैः
जीव एव तव मे खल भक्ष्यस्त्वत्कृतिस्तु भविता फलिता ते ॥ ६१ ॥

मान्त्रिकं तनयलग्नपिशाचं तत्प्रसूर्जनमुखैश्च विदित्वा ॥
पुत्रदैन्यमवलोक्य विदूना सन्ततं समभजत्परमेशम् ॥ ६२ ॥

अहल्योवाच —

प्रार्थयन्त्यपि बभूव पिशाचं दानपूजनमुखैः सदुपायैः ॥
मन्दिरं तव विधाय च नित्यं पूजयामि हि विमुञ्च सुतं मे ॥ ६३ ॥

भूत एक मम एष सुतस्तं मुञ्च मुञ्च करुणां कुरु तात ॥
राज्यमेतदधुना मम रक्ष तद्रुदनमपि सन्ततनितन्तुम् ॥ ६४ ॥

पालयामि तव सर्वकुटुम्बं वारयामि सकलां तव चिन्ताम् ॥
दापयामि भवदीप्सितवित्तं वारयस्व मम सङ्कटमेतत् ॥ ६५ ॥

पिण्डदानमपि कर्म गयायां कारयामि विधिवत् तव पुत्रैः ॥
नैव पीडय सुतं यदि हंसि नहि मां जहि पिशाच दयालो ॥६६॥

साधयेयमयि तात पिशाच स्वर्गतिं खलु मदात्मजहस्तात् ॥
प्रार्थयेऽहमधुना तव दासी वर्ष वर्ष करुणामृतबिन्दून् ॥ ६७ ॥

किं वदेयमयि भूतवरेश सर्वमेतदपि सम्प्रति दास्ये ॥
मुञ्च मुञ्च मम बालकमेनमाश्रयं च मम जीवनयष्टेः ॥ ६८ ॥

आकर्ण्य शान्तमनसा सकलं त्वहल्यावाक्यं स तां प्ररुदतीं पुनराबभाषे ॥
मातः क्षणं सुमनसा दृढमाकलय्य योग्यं ममैतदधुना भवती ब्रवीतु ॥६९॥

आगो विनैव विहितो मम जीवघातः पुत्रेण ते, प्रतिनिधिः खलु तस्य घातः ॥
नान्यत् ततो बलवती परमेश्वरेच्छा घातस्य घात इति मे प्रहिणोति तत्र ॥७०॥

१. वसन्ततिलकावृत्तम् ।

कुटुम्बविषये—नो मे कुटुम्बपरिपालनमद्य तुष्ट्यै किंवा मनोज्ञदृढमन्दिरबंधनादि॥
अन्नार्थिनश्च पुरुषस्य भवेद्दुकूलं तोषाय किं मधुरचन्दनचर्चनं च ॥७१॥

[1]त्वत्पुत्रजीवेन यथा भवेयं तृप्तस्तथा नो विविधप्रदानैः ॥
तस्मात्तमेकं हि यदा निहन्यां मातस्तदाहं च सुखं भजेयम् ॥ ७२ ॥

[2]आर्तस्य धैर्यं क्षुधितस्य भक्ष्यं जलं तृषार्तस्य भवेद्धिताय ॥
वस्त्रं यथा शीतनिपीडितस्य तथा मम त्वत्तनयस्य जीवः ॥ ७३ ॥

[1]लोके [3]नरे भूतदया यथास्ते भूतेषु नो तद्वदयं तथा नुः ॥
तस्मादहं हन्मि तवाद्य पुत्रं मन्त्रैरनेकैरगदैश्च गुप्तम् ॥ ७४ ॥

[4]मरणं न कदापि कस्य जन्तोर्न परेशस्य विना भवत्यनुज्ञाम् ॥
तव पुत्रमृतिस्तथैव मातः परिदृश्यो निखिलैरहं निमित्तम् ॥ ७५ ॥

[5]मातृता च सुतता वपुषीयं जायते पुनरपि म्रियते च ॥
अन्तरे किमविनाश्ययमात्मा नो तथेति खलु सार्वजनीनम् ॥ ७६ ॥

धार्मिकी मतिरयि प्रथिता ते पारलौकिकमतस्तनयस्य ॥
भूयतां तव करादिति साङ्गं तं नयामि यमराजनिकेतम् ॥ ७७ ॥

[6]आकर्ण्य तस्य वचनं हृदयप्रदाहि सन्तप्तशूलमिव मान्त्रिपिशाचकस्य ॥
तत्सर्वथा हतबला च जनन्यहल्या साक्रोशनं परमहो शरणीचकार ॥७८॥

**तदेवाह—**

यत्पूर्वजन्मविहितं मम दुष्कृतं तत्किं पुत्रमारणफलाय नियुक्तमासीत् ॥
ईशेन, निष्कृतिविधावहमस्य यस्माद्यत्नं दृढं कृतवती न विनष्टमासीत्॥७९॥

१. इन्द्रवज्रावृत्तम् । २. उपजातिवृत्तम् । ३. यथा नरे भूतविषया दया अस्ति तथा भूतेषु नृविषया दया नास्ति । ४. औपच्छन्दसिकं वृत्तम् । ५. स्वागतावृत्तम् । ६. वसन्ततिलकावृत्तम् ।

पुत्रं निरीक्ष्य च पुरा श्वशुरस्य दुःखं पश्चात्कृतं स च सुतोऽन्तकगेहमाप्तः ॥
भूतप्रपीडिततनुः किमतो विधेयं दुर्दिष्टयाप्यबलया च मया जनन्या ॥८०॥

गम्भीरघोषणमनोरमवाद्यरूपं क्षारादिदुःखदपरं रचितान्तरङ्गम् ॥
संसारसिन्धुमतिदुःखतरङ्गमेनं साक्षान्ममाद्य च विभावयसीव शम्भो ॥८१

कुत्र यामि शरणं कमीश्वरं शीर्ष्णि मे पतितदुःखपर्वतम् ॥
वारयेदिति सुदीनमानसा क्रोशति स्म हरिणीव मन्दिरे ॥ ८२ ॥

श्रुत्वा कालवशं गतं च जगतां मातुः सुतं चैककं ॥
मालेरावमहोऽब्दकल्पमधुना राज्याधिकारीकृतम् ॥
लोकास्तत्र समागताश्च सकला ग्रामान्तरस्थास्तदा ॥
चक्रुर्निर्हरणं नृपस्य विधिवद्दूनान्तरङ्गाः परम् ॥ ८३ ॥

अंकाष्टशास्त्रसहिता पृथिवी च यत्र श्रीशालिवाहनशके समये बभूव ॥
श्रीमालवाधिपतिमालवरायचन्द्रोऽप्यस्तङ्गतः स्वजननीं रुदतीं विहाय॥८४॥

मासि फाल्गुनिके शुक्लद्वादश्यां शुक्रवासरे ॥
स्वराजधान्यामिन्दूरे मालेरावो मृतिं गतः ॥ ८५ ॥

इति श्रीमद्भागवतोपाभिधवापुशास्त्रिसूनुना मय्यारामशास्त्रिणा विरचिते श्रीमदहल्याचरिते सांसारिकसङ्कटवर्णनं नाम अष्टमः सर्गः ।

१ रथोद्धतावृत्तम् । २ शार्दूलविक्रीडितं वृत्तम् । ३. अब्दात् किञ्चिदूनम् ।
४. १६८९ तमे वत्सरे ।

## नवमः सर्गः ।



खण्डोजिपत्नी सुतमृत्युतप्ता दिने दिने दुःखितमानसासीत् ॥
कृष्णत्रियामेव विवर्धमानध्वान्ता परित्यक्तजनाधिवासा ॥ १ ॥

एकान्तवासापि दुरन्तचिन्ताव्यग्रा विचारैर्बहुभिर्दुरूहैः ॥
लोके सदा व्याकुलमानसत्वाद्बभौ विमूढेव च योगिनीव ॥ २ ॥

त्यक्तान्नपाना च विहारहीना विद्योतमानाग्निशिखेव सूक्ष्मा ॥
भृशं कृशाङ्गी जननी जनानामासीदहल्या सुतदुःखशल्या ॥ ३ ॥

बहिर्जनानामपि मोदयित्री चित्ते सदासीद्बहुशोककर्त्री ॥
प्राप्तप्रजापालनकार्यकर्त्री चक्रे निवासं निजराजधान्याम् ॥ ४ ॥

**अथ विघ्नमाह—**

गङ्गाधराख्यो यशवन्तपुत्रो मल्लारिभूभृत्सचिवः सुशीलः ॥
राष्ट्रे प्रसिद्धः कुशलः स्वकार्ये बभूव मन्त्रिष्वपि पूर्वगण्यः ॥५॥

यो यौवने राजहितैकदक्षः स वार्धके स्वोदरपूर्तिलुब्धः ॥
राष्ट्रे ध्रुवं तद्धनमानलिप्सा बभूव साकं वयसा विवृद्धा ॥ ६ ॥

खण्डोजिपत्न्याः सकलेऽपि राष्ट्रे लोभो न लेभे स्थलमेव वस्तुम् ॥
तस्मात्सगङ्गाधरमन्त्रिचित्ते स्थातुं सुगुप्तं च किमाजगाम ॥ ७ ॥

दुष्टानहल्या शरणागतान् स्वान्प्रति स्थलं नैव ददौ कदापि ॥
लोभं च शत्रुं जगति प्रसिद्धं स्थलं ददौ नैव किमत्र चित्रम् ॥८॥

१. उपजातिवृत्तम् । २. कृष्णपक्षरात्रिः । ३. इन्द्रवज्रावृत्तम् । ४. गङ्गाधरः शङ्करः उपास्यदेवता तत्र स्थितं मां अहल्या न निवारयेदित्यर्थः । अपरो गङ्गाधरश्चन्द्रचूडः । तस्मात्स गङ्गाधरचन्द्रचूडे स्थातुं सुगुप्तं च किमाजगाम इति वा । ५. उपजातिवृत्तम् ।

अन्यत्र सा त्याजयितुं वदेत्किं कुत्रापि लोभस्य पदं प्रलब्धम् ॥
इतीव गङ्गाधरचित्तमेकं लब्ध्वा स्थलं वृद्धिमवाप नित्यम् ॥ ९ ॥

गङ्गाधरोऽयं फलकामुकः सन् लोभद्रुमं वर्धयितुं प्रयत्नम् ॥
चकार, नित्यं स परन्तु लोभो बभूव नाशाय च तस्य हेतुः ॥१०॥

अल्पोऽपि लोभो महतीं स्वकीर्तिं निहन्ति नूनं बहुकाललब्धाम् ॥
कोपो मनुष्यादिशरीरकान्तिं सुगौरवर्णामिव भाग्यलब्धाम् ॥ ११ ॥

गङ्गाधरोऽस्त्रं स्वमतुल्यमेव पार्थाय दातुं किल लुब्धकोऽभूत् ॥
स्वार्थं परं साधयितुं प्रवृत्तो गङ्गाधरोऽपार्थमिदं विचित्रम् ॥ १२ ॥

लोभः कलङ्कः शरणं जगाम तं चन्द्रचूडं यदलब्धभूमिः ॥
इतीव तं सादरमात्मचित्ते निवेशयामास स सानुकम्पः ॥ १३ ॥

लोभं हि भान्तं परमप्रियं तं गङ्गाधरोऽसौ वृणुते स्म नित्यम् ॥
खण्डोजिपत्नीं परमप्रियां तां विरक्तिमेवावृणुतात्मलिङ्गाम् ॥ १४ ॥

लोभो न लाभाय भवेत्सुदीर्घं विमात्रतामेत्य परस्य पुंसः ॥
इतीव सा संसृतितो विरागं वव्रे सदैवात्मजमृत्युकालात् ॥ १५ ॥

विरक्तिरेषा च मयाश्रिता चेत्परेशपादाम्बुरुहानुरक्तिम् ॥
दद्यादितीव प्रसभं किलैनामङ्गीचकार प्रतिभावती सा ॥ १६ ॥

निराश्रिता स्त्री स्वयमेव तस्माल्लोभेन पुंसा वसतिर्न मेऽस्तु ॥
स्त्रीत्वान्निवासाक्षमयेव चैषा योग्यां विरक्तिं शरणीचकार ॥ १७ ॥

१. गङ्गाधरः शङ्करः स्वकीयमपि तत् पाशुपतास्त्रं पार्थायार्जुनाय दातुं धृताभिलाषोऽभूत् किन्तु वर्ण्यविपर्ययोऽयं गङ्गाधरो अपार्थं पार्थविरहितं पक्षेऽपगतार्थं स्वार्थं साधयितुं प्रवृत्त इति विलक्षणमेतत् । २. स्त्रीलिङ्गाम् ।

**गङ्गाधर उवाच—**

खंडोजियोषित्कृतराज्यरक्षा योग्यापि सा नो खलु शास्त्रमान्या ॥
अग्रेधिकारो हि गतः स चार्वाक्कदापि नो यात्विति शास्त्रघोषः ॥१८॥

तस्मात्तुकोजी चतुरो वयस्यो राज्याधिकारी करणीय एषः ॥
तच्छास्त्रतो युक्तमिदं मतं मे न्यवेदयत्तज्जगतो जनन्यै ॥ १९ ॥

दौहित्रको यद्यपि चाधिकारी परं 'नथ्याबा' वयसासमर्थः ॥
तस्मात्तुकोजीनृपतिर्विधेयः कोशं प्रजां राष्ट्रधुरां च रक्षेत् ॥ २० ॥

जाटाँश्च जित्वा विजयं लभेत कुम्भेरिदुर्गं निखनेत्समूलम् ॥
मल्लारिसङ्कल्पितमेव पूर्वं क्रमात्करिष्यत्यखिलं तुकोजी ॥ २१ ॥

[1]हंकूउदाभ्यां चतुराबलाभ्यामित्थं निवेद्य प्रणताश्रितायै ॥
खण्डूजिपत्न्यै यशवन्तपुत्रः प्रादर्शयद्राष्ट्रहितावहत्वम् ॥ २२ ॥

[2]स्वकार्यसंसाधकमन्त्रमेनं प्रेक्षावतां राष्ट्रहितावहं च ॥
श्रुत्वापि सा तं न च किंचिदूचे राज्याधिकारं च मुमोच नाप्तम् ॥२३॥

अभूतपूर्वं वचनं किलैतत्संश्रुत्य सन्मन्त्रिमुखादहल्या ॥
स्वसूनुमृत्योश्च नितान्तमूढे[3] चित्ते विचारं कलयांचकार ॥ २४ ॥

**तदेवाह—**

मल्लारिराजस्य च कार्यकाले विश्वस्तवर्यश्चतुरो य आसीत् ॥
स वार्धके लोभरिपोर्वशेऽभूद्दैवमेवात्र परं न किञ्चित् ॥ २५ ॥

यो यौवने कर्मकरः सुशीलः भूभृत्प्रजारक्षणकार्यचिन्ताम् ॥
सदा वहन् सोऽद्य दुराग्रहः सन् स्वार्थं नृपोत्साधयितुं किमीष्टे ॥२६॥

१. इन्द्रवज्रावृत्तम्। मल्लारेर्द्वे कन्ये। २. उपजातिवृत्तम्। ३. मोहिते
४. राघोबा पेशवे तस्मात्।

यदुन्नतं स्थानमवाप्य बिन्दुस्समीरसङ्गात्पतति ह्यधस्तात् ॥
दुर्लोभसङ्गादवमानितोऽभूद्गङ्गाधरोऽयं कविभिस्तथैव ॥ २७ ॥

वैधव्यमाप्तं तनयस्य नाशो न कोऽप्यहो मे सदनेऽवशिष्टः ॥
अद्यैव सर्वं मम राष्ट्रमेतत्संरक्षितुं, दुर्धर एष कालः ॥ २८ ॥

किं वात्र कुर्यामबलाहमेका कोऽस्मिन् प्रसङ्गे मम वै सहायः ॥
परं विचारं च सुदीर्घकालं कृत्वेत्थमात्मन्यथ निश्चिकाय ॥ २९ ॥

तदेवाह—

गोडुम्बवत्तद्वचनं मनोज्ञं बहिःपरं तिक्तनिजार्थपूर्णम् ॥
श्रुत्वा समाहूय च तानवीरा सामर्षधैर्यं निजगाद धीरा ॥ ३० ॥

नो राज्यमेतन्मम नर्ममायां विधाय शूरश्वशुरेण लब्धम् ॥
शौर्येण देहोद्गतशोणितेन तीक्ष्णेन खड्गेन परं प्रहृत्य ॥ ३१ ॥

श्रीशङ्करस्याद्य कृपाप्रसादाज्जातोन्नतेऽहं किल धन्यगेहे ॥
तथैव मल्लारिवधूत्वमाप्ता खण्डोजिपत्नी न च किञ्चिदूनम् ॥ ३२ ॥

मल्लारिणा प्राप्तसुशिक्षणाहं बिभेमि नान्यान् शरणं व्रजामि ॥
स्त्रीभिर्गृहीत्वा चतुरङ्गसैन्यं युद्धाय सन्नद्धमना भवामि ॥ ३३ ॥

भवद्वचो भीतिकलङ्कयुक्तं मल्लारिराजस्य च कीर्तिचन्द्रम् ॥
कलङ्कितं सन्तनुयात्तदस्या न सम्मतं शूरकुलाङ्गनायाः ॥ ३४ ॥

मल्लारिभूपप्रमुखत्रिकस्य वंशेऽवशिष्टा च यदप्यवीरा ॥
मय्यायतन्ते सकलाधिकाराः शास्त्रान्न मिथ्येति वचो ब्रवीमि ॥३५॥

महाशयाग्रेसरसार्वभौमः श्रीराघवेन्द्रः खलदष्टकर्णः ॥
नेच्छेच्छिशोर्हस्तगतं च वस्तु यथा क्षुधार्तोऽपि शशं मृगेन्द्रः॥३६॥

१. नेति पदं उभयोः क्रिययोः सम्बध्यम् । २. इन्द्रवज्रावृत्तम् । ३. उपजातिवृत्तम्. ४. राघोबादादा पेशवे ।

राघोबाविषये—निराश्रिता सा परिरक्षणीया तद्दुःखमाला च निवारणीया ॥
तस्यै च कल्याणकरोपदेशः कार्यो महद्भिर्नृपनीतिविद्भिः ॥ ३७ ॥

सर्वत्र जीवानुगतं च कर्म तथैव कर्मानुगतं च दुःखम् ॥
तन्नाशकश्चात्र शुभोपदेशो यथागदो देहगते च रोगे ॥ ३८ ॥

प्रारब्धकर्मानुगतानि दुःखान्यापद्यमानानि सदैव जीवः ॥
भुङ्क्तेऽत्र तस्मै विविधप्रकारैः साहाय्यकं यः कुरुते स भूपः ॥३९॥

बलेन चेद्राघवपन्तमुख्या लिप्सन्ति युद्धेषु च मां विजेतुम् ॥
तर्ह्येव सन्नद्धबलाहमस्मि सम्पालयेत्तत्र महेश्वरो मे ॥ ४० ॥

लोभाद्बलाद्वापि परोपदेशाल्लघुं महान्तो यदि हेलयेयुः ॥
तर्ह्येव किं तेन निराश्रयेण विधेयमीशाङ्घ्रिकृपां विनात्र ॥ ४१ ॥

युद्धे जिता स्याद्यदि केवला स्त्री शूरैर्भवद्भिः पुरुषैस्ततः किम् ॥
जिता भवेयुर्यदि मद्बलेन सर्वे विलोक्योपहसेयुरेव ॥ ४२ ॥

रणप्रसङ्गो यदि मेऽस्ति मान्यो नद्धा भवन्तो न परं भवन्तु ॥
लब्धे जये वाथ पराजये वा फलं न तादृग् भवतां भवेच्च ॥४३॥

इत्थं निवेद्य प्रतिहारतः सा श्रीराघवेन्द्राय नृपालकाय ॥
स्त्रियश्च सर्वा कुशलाः समीकं विधातुमाज्ञापयदाशु राज्ञी ॥४४॥

सम्प्रेष्य पत्र्याण्यखिलानमात्याँस्तुकोजिने सादिमुखान्निवेद्य ॥
युद्धं विधातुं नृपराघवेण युक्ता बभौ योद्धृवराबलाभिः ॥ ४५ ॥

भुक्त्वैव तत्राचमनार्थमत्रेत्येवं स सेनाधिपतिस्तुकोजी ॥
आगत्य तूर्णं नृपराघवेन्द्रं तुरङ्गमारोहमुखाज्जगाद ॥ ४६ ॥

१. इन्द्रवज्रावृत्तम् । २. उपजातिवृत्तम् । ३. युद्धम् ।

अर्वाक्क्षिप्रामागताश्चेद्भवन्तो युद्धं कृत्वाहं विजेष्ये हि युष्मान् ॥
माता मान्या मे भवद्भ्यस्ततस्तां यूयं भूपाः सर्वथा मानयध्वम् ॥४७॥

सम्यग्विचार्याथ सुशीलवद्भिः सन्नह्यतां योद्धुमथो भवद्भिः ॥
इतोऽधिकं किं तनयेन वाच्यं बालेन वृद्धेभ्य इवोपहास्यम् ॥ ४८ ॥

**ततः स्त्रीणां युद्ध सन्नहनमाह—**

काञ्चीगुणैरुल्लसितास्तदास्तत् स्त्रियः परं खड्गविराजमानाः ॥

मनोहरा यद्यपि ताः परेषां युद्धे तदा प्राणहरा बभूवुः ॥ ४९ ॥

भावैर्मनोरञ्जनकार्यकर्त्र्यः खड्गैः खरैः शात्रवशीर्षहर्त्र्यः ॥
तदा बभूवुस्सकलाः स्त्रियस्ता हेतुश्च राज्ञी कुशलात्र नान्या ॥ ५० ॥

सांदिन्यस्ता वारबाणाहिताङ्ग्यो वादिन्यस्ताश्छिन्द्मि भिन्द्मीति शब्दान् ॥
अग्रे स्थातुं धावमानाः स्वसैन्याच्छत्रूञ्जेतुं शीघ्रमत्युन्मुकाश्च ॥ ५१ ॥

अश्वारोहा धैर्यमालम्ब्य शत्रोरग्रे दृष्ट्वा मोदमाप्ता च राज्ञी ॥
लोकैर्दृष्टा सर्वशत्रून्विजेतुं मूर्ता शक्तिः प्रेषयन्ती स्वसैन्यम् ॥ ५२ ॥

मालतीनियतकुन्तलहस्ताश्चन्द्रहासमुविराजितहस्ताः ॥
वर्णिताः कविभिरप्यबलास्तास्सम्बभुर्बलयुता इति चित्रम् ॥ ५३ ॥

शिन्दे महादाजिरपि प्रविलोक्य सर्वं तानाह वीरनृपते भवतां सहायः ॥
नाहं भवेयमुपजीव्यविरोधकारी पर्यायतश्च नृपतेरपि रोषपात्रम् ॥५४॥

१. शालिनीवृत्तम् । २ उपजातिवृत्तम । ३. शत्रूणां समूहः शात्रवम् । ४. वारबाणं—कञ्चुकं, चिलखतइति महाराष्ट्रयाम् । ५. स्वागतावृत्तम् । मालतीलताकुसुमग्रथितकेशपाशाः ६. खड्गशोभितकराः । ७. वसन्ततिलकावृत्तम् । ८. आश्रयदात्री ।

सन्निधौ सकलमालवस्त्रियः सङ्गताः सयदि संयति स्वयम् ॥
राघवोऽपि चकितोऽवदत्तदा युद्धकर्मकुशलो विलोकयन् ॥ ५५ ॥

युद्धं विधेयं किमु नो विधेयं स्त्रीभिस्सहाद्यैव मया नृपेण ॥
कृते तु दोषः पुरुषेण नार्या भीतो भवेयं न कृते तु युद्धे ॥ ५६ ॥

कृतेऽपि दोषोऽप्यकृतेऽपि दोषो रणे च राज्ञेति महान् विचारः ॥
को मेऽस्ति मार्गोऽत्र यशोऽवनाय कर्तव्यमूढस्य विचक्षणस्य ॥ ५७ ॥

मल्लारिरायेण सुशिक्षिता नो सामान्यबुद्धिस्तदसावहल्या ॥
राष्ट्रावितारं पुरुषं परं मां कुण्ठीकरोति स्म किमत्र वच्मि ॥ ५८ ॥

तुकोजिवाक्यं मनसावबुध्य रणाङ्गणे तं ललनासमाजम् ॥
स राघवेन्द्रः क्षणमात्रमूढो जातस्तदैवाश्रुतदृष्टपूर्वः ॥ ५९ ॥

अपि च—युद्धं स्वकीयं सकलानभीष्टं विज्ञाय तद्भूपतिराघवेन्द्रः ॥
तदात्मकृत्यं सकलं जनेभ्यो विभावयामास तदन्यथैव ॥ ६० ॥

तदेवाह—

राज्याः सुतं कालवशं गतं तं विज्ञाय सर्वे भृशदूनचित्ताः ॥
वयं भवद्दुःखविभागिनः स्मः समागता इत्यभिधातुमद्य ॥ ६१

श्रीराघवेन्द्रस्य ततस्तुकोजी मनोगतान्यार्थविभासिवाक्यम् ॥
श्रुत्वा स सैन्यागमनं किमेतद्बहादरं दर्शयितुं बभाषे ॥ ६२ ॥

इत्थं महीपालकृपाप्रसादः सर्वेषु चेन्माण्डलिकेषु बाढम् ॥
अत्यालसस्याप्यतपस्विनश्च गङ्गाप्रवाहोऽभिमुखं किमास्तः ॥ ६३ ॥

१. रथोद्धतावृत्तम् । २. उपजातिवृत्तम् । ३. कीर्तिरक्षणाय । ४. इन्द्रवज्रावृत्तम् । ५. राष्ट्ररक्षणकर्तारम् ।

यद्यागताः स्युः सदने मदीय आरुह्य तन्मानवयानमेव ॥
तोषाय नः स्यात्खलु सैनिकादि यदस्मदीयं भवदीयमेव ॥ ६४ ॥

कृतं च सत्यापयितुं नरेन्द्रः श्रीराघवस्तच्छिबिकोपविष्टः ॥
खण्डोजिपत्न्या दिनकार्यजातं समीक्षितुं तत्र किलावतस्थे ॥ ६५ ॥

व्यवस्थितो यद्यपि शूरवर्यः कार्येषु दक्षो नृपराघवेन्द्रः
तथैव सा राघवतत्त्वमेकं पूर्वं विजज्ञेऽप्यधिकं किलैतत् ॥ ६६ ॥

कुले जघन्ये यदि लब्धजन्मा स्वाचारतश्चोत्तमतां प्रयाता ॥
स्नानादिकर्मस्वपि सा सदैव सद्धिप्रमार्गानुगतिं व्यतानीत् ॥ ६७ ॥

विज्ञाय तस्याः सकलां व्यवस्थां क्षणं नृपेन्द्रश्चकितो बभूव ॥
चातुर्यतः संसृतिकार्यकर्त्री नूनं स्वयं ब्रह्मपदं प्रयायात् ॥ ६८ ॥

यानेकजन्मभिरहो बहुभिःप्रयत्नैर्नो लभ्यते ध्रुवगतिः प्रबलेन पुंसा ॥
तां हीनजातिरपि योषिदपि प्रकृष्टां स्वाचारतः खलु लभेत जगन्यहल्या ॥६९॥

यत्पूर्वजन्मशुभसंस्कृतिसंस्कृतं चेच्चित्तं तदेव परजन्मनि सद्धिधत्ते ॥
यद्धीनजातिरपि योषिदसावहल्यामूर्तिर्दशा विषय एव परं प्रमाणम् ॥ ७० ॥

शूराश्च केचन नराः कतिचित्कवीन्द्रा वेदान्तशास्त्रनिपुणाः कतिचिन्मुमांसः ।
केचित्कलाकुशलतामपि दर्शयन्तः सर्वे विलोक्य किल तां चकिता बभूवुः ॥७१

दृष्ट्वा पुरश्च गुणिनो गुणवत्यहल्या नोचेत्सदैव भजते स्म च निर्गुणं तत् ।
एवंविधाचरणशीलदृढप्रयत्ना कार्यानुगुण्यपररूपधरा बभूव ॥ ७२ ॥

गङ्गाधराच्च कुशलान्नृपराघवेन्द्रस्तस्मान्नृपादपि च सा वनितातिदक्षा ॥
स्थाने स्थितैव परमीप्सितकार्यकर्त्री प्रादर्शयद्यदुभयोरपि कौशलं स्वम् ॥७३।

१. उपजातिवृत्तम् । २. पालखी इति महाराष्ट्र्याम ।३. वसन्ततिलकावृत्तम्

सतां दुष्टैः कृता बाधा सा दुष्टानेव बाधते
भास्करे कृतनिष्ठ्यूतिर्निष्ठीवनपरानिव ॥ ७४ ॥

गङ्गाधरो राघवेन्द्रो द्वावहल्याहितैषिणौ ॥
शिवविष्णू इव परमभूतां कार्यसाधकौ ॥ ७५ ॥

गङ्गाधरपदेऽहल्या सर्वदाऽधोनिवासिनी ॥
परमं तर्हि सोऽधोऽभून्नित्यमत्यद्भुतं हि तत् ॥ ७६ ॥

चन्द्रचूडपरिपीडितापि सा चन्द्रचूडचरणानुकम्पया ॥
मालवेशजननी तदा सती मालवेशपदमास्थिताभवत् ॥ ७७ ॥

इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते
श्रीमदहल्याचरिते चन्द्रचूडकारस्थानं नाम नवमः सर्गः ।

१. अनुष्टुब्वृत्तम् । २. रथोद्धतावृत्तम् । ३. एको गङ्गाधरचन्द्रचूड अपरश्चन्द्रशेखरः शङ्करः

## दशमः सर्गः



एवं सदा श्वशुरशिक्षणगाढचित्ता सैन्यादियोजनविधावपि सावधाना ॥
खण्डोजिपुत्रवनिता जनितानुरागा राष्ट्रे स्वनिष्ठहृदयं सुतरां बभूव ॥ १ ॥

मल्लारिभूपतिरहो निखिलेषु लोकेष्वग्रेसरोऽमरगणेषु यथा मरुत्वान् ॥
युद्धेषु सैन्यनिवहेषु षडाननोऽभूत्किंवा ग्रहेषु नवसु द्युतिमांश्च भास्वान् ॥२॥

धैर्येण शत्रुहनने बहुभिः किमुक्तैः प्रत्यक्षचकार ननु भूपतिवाजिरायम् ॥
शौर्येण दुर्गविजये नृपराघवेन्द्रः प्रेम्णाह्वयन्सुचतुरं सरदारमेनम् ॥ ३ ॥

आयोधने यवनजातिमतां वरस्य दिल्लीपतेर्मनसि भीतिमुदीरयाणः ॥
सिंहो ध्रुवं यवनकाननहिण्डमानो मल्लारिरास्त खलु सार्थकनाम गृह्णन् ॥४॥

यत्नेन तेन महताप्यसकृत्प्रसङ्गेष्वध्यापिता कुलवधूर्बहुराजधर्मान् ॥
आसीत्तदात्वमतिमानितराजयोषिन्मान्या च हेतुरभवत्खलु तत्र शीलम् ॥५॥

वृत्तिं जनक्षयकरीं हृदये निधाय लोके बहिर्मधुरवागिव दुष्टमर्त्यः ॥
मल्लारिरेष न, पुरोपि नृपस्य सर्वं स्पष्टं ह्यवोचदखिलेषु जनेषु नित्यम् ॥६॥

शौर्यं तदीयमवलोक्य च बाजिरायस्तस्मै ददौ सकलमालवदेशभागम् ॥
आदाय दुष्टरिपुघातकसैनिकादीन् साहाय्यकं च परभूमिपतेर्विधातुम् ॥७॥

युद्धे परं रिपुषु ये कपटं विधाय शूरा नराः क्षितितले विजयं लभन्ते ॥
तेष्वग्रगण्य इतरान् सकलानपेक्ष्य मल्लारिरेष गतवान् महतीं प्रसिद्धिं ॥ ८॥

तस्मादयं सकलशूरजनेषु मान्यो धीरस्तदैव "सरदार"पदं प्रपन्नः ॥
तच्छिक्षणं बहुविधं समवाप्य शश्वद्भूपस्नुषा समभवच्चतुराग्रगण्या ॥ ९ ॥

१. वसन्ततिलका वृत्तम् ।

कस्यापि रक्षिण इति प्रविलोक्य शौर्यं तत्खेटकं बहुधनैः परिपूर्य भूपः ॥
तत्पारितोषिकमिति प्रददौ स तस्मै संभाव्यतां च तदपूर्वधनप्रदानम् ॥१०॥

आकारयद्बहुश आत्मजजातिवर्गान् प्रेम्णा तथैव मरहट्टजनान् सुशीलान् ॥
संवासयन् स्वनगरे द्रविणं प्रदाय नूनं न्यदर्शयदसौ स्वदयाघनत्वम् ॥११॥

शिन्देबुळेप्रमुखबार्गळलांबहातेत्येवं जना धनगृहत्वमवाप्तवन्तः ॥
पुत्राप्तवर्गसहिता नगरे न्यवात्सुः किं बीजमत्र परमन्ननिवासदानात् ॥१२॥

मल्लारिभूपतिरयं सहकारवृक्षस्तस्योपदिष्टममलं मधुरं फलं च ॥
तद्रक्षणाय किल भूपवधूरहल्या स्वादाय तस्य निरताः सकलाः प्रजाश्च॥१३॥

मल्लारिरेष पयसांनिधिरेव साक्षात्तस्योपदिष्टममृतान्वितपात्रमेव ॥
पद्मेव सा च परिवेषणकार्यकर्त्री किं ताः प्रजास्तदमृतं सततं पिबन्ति ॥१४॥

मल्लारिभूपतिवधूरथवा सुशीला नूनं वसिष्ठपरिपालितकामधेनुः ॥
नित्यं स्वराष्ट्रसमधिष्ठितसर्वलोकसंरक्षणं किमकरोद्विविधैः प्रदानैः ॥ १५ ॥

नेदिष्टलुब्धजयजोधपुरादिभूपा वैरं मिथो मुमुचुरेव यदाज्ञयामी ॥
मन्त्रैश्च सन्धिकरणे चतुरा किलैषा सर्वाञ्जनान् सहजमेव वशीचकार ॥१६॥

लोके गुणान् समवलोक्य कदापि नैव लुब्धा भवन्ति पशवोपि कृषीवलानाम् ॥
आश्चर्यमत्र परमं नृपतेः प्रजास्ता लुब्धा बभूवुरखिलाश्च वधूगुणेषु ॥ १७ ॥

मल्लारिसूनुमहिला निखिले स्वराष्ट्रे विख्यातकीर्तिरभवच्छुचिरम्यशीला ॥
तस्या हिताचरणतश्च कृतज्ञभावाद्रक्ताः प्रजाः समभवन्नतिचित्रमेतत् ॥ १८ ॥

या वा ह्यनेकविधकर्मसु शिक्षितासीद् भूपेन तेन गुणसङ्घखनिर्जगत्याम् ॥
जात्या स्वयं सुचतुरा च दृढप्रयत्ना तस्मादभूत्सुजनचित्तनिवासभूमिः ॥ १९॥

स्वर्गे प्रजाजनहितैकपरामहल्यां भूपो विलोक्य परमात्मविचारदक्षाम् ॥
एकामिमां जगति बुद्धिमतीं न चान्यां मेने प्रपञ्चपरमार्थसुसाधयित्रीम् ॥ २० ॥

शूरो जनोऽपि मनुते निजकौशलेषु गुर्वीमिमां विविधमार्मिकसन्नियोगैः ॥
विद्वाञ्जनोऽपि परमार्थविचारपूर्णैः प्रश्नैर्विभावयति सज्जनसङ्घमुख्याम् ॥ २१ ॥

मल्लारिभूपतिरपि प्रसभं नियुक्तां तां राष्ट्रकार्यकरणे स्वतिगूढचित्ताम् ॥
मायामिवैकपुरुषेण नियोजितां स्वां स्वस्थो भवन्निजसुखानुभवोपलब्ध्यै ॥२२॥

न्यायादिकार्यकरणे स्वमतं विचारैर्निश्चित्य शास्त्रकथितैर्विविधैः प्रमाणैः ॥
कस्यापि बुद्धिमसतीं न च शृण्वती सा लोभात्समभ्रमकरोन्निजराष्ट्रकार्यम् ॥२३॥
यस्या मतिर्न च कदापि परोपजीव्या न सीत्तथैव परिनिन्दितमार्गगम्या ॥
शास्त्रोचितव्यवहृतावतिजागरूका नैतादृशी जगति कापि तथा किलैका ॥२४॥
मल्लारजीहरिकुशाग्रमतिश्चनानासंज्ञैः परैः सकलराष्ट्रहितैकदक्षैः ॥
कृत्वा विचारमथ तन्मतमाकलय्य युक्तं स्वमेव कुरुते स्म न चेतरोक्तम् ॥२५॥

तुर्यांशतो निखिल भूमिकरं गृहीत्वा सत्वं ररक्ष परमात्मकृषीवलानाम् ॥
प्रेम्णा भयेन सकलान् स्ववशे विधाय राज्यं चकार नृपसूनुवधूरहल्या ॥२६॥

यायात्समृद्धिमतुलां हि जनः स्वकीयस्तोपाय मे भवति धान्यधनादिभिस्तत् ॥
तोषं प्रजासु निखिलासु विवर्धमानं मेने स्वराष्ट्रसदनस्य निखातभूमिम् ॥२७॥

अन्ये नृपा जगति माण्डलिकाश्च सर्वे मन्यन्त आत्मगृहवृद्धिमुखान राष्ट्रम् ॥
जीवन्तु तत्स्थितजना अथवा म्रियन्तां न न्यूनमीषदपि मेऽखिलभोगदेषु ॥२८

मल्लारिरेष जनको जगतोऽखिलस्य नाम्ना प्रसिद्धपरमेश्वर एक एव ॥
प्रेम्णादरेण किल तेन नियोजितास्मि राष्ट्रस्थजीवपरिपालनकार्यकर्त्री ॥२९॥

तद्राष्ट्रकार्यकरणं मम मुख्यधर्मस्तत्सावधानमनसा च मया विधेयम् ॥
नोचेत्भवेन्मम च शम्भुपदेऽपराधस्तद्दण्डनं शिरसि मे निपतेन्न मिथ्या ॥३०॥

एके नृपाः सकटिबन्धमतीव लोकान् सम्पीड्य तत्र समये स्वबलीनगृह्णन् ॥
नूनं च ते समवपन्निजनाशबीजं नासीत्तथा कविचरित्रपुरःसरस्त्री ॥ ३१ ॥

१. स्वर्गस्थ इत्यर्थः। २. चतुर्थांशं। ३. स्वकरान्।

राष्ट्रे यथासमयमेव जनस्य कार्यं कार्यं नृपेण न तु तत्र चिरं विलम्बः ॥
बिन्दौ गतं यदवहेलनतस्तदेव सम्प्राप्यते न च कदापि महातडागे ॥ ३२ ॥

तद्राष्ट्ररक्षणविधौ निजसैनिकानां संस्थापने न च कदाचिदपि प्रसङ्गः ॥
यत्प्रेमरज्जुविनिबद्धकराः प्रजास्तत्सर्वं यथायथमिव व्यवधुश्च चित्रम् ॥ ३३ ॥

प्रेम्णा यथा जगति रक्षति सर्वराष्ट्रं नासीत्तथोदितमुपायचतुष्टयं तत् ॥
प्रेम्णा वशीभवति यत्र जगत्त्वशस्तत्र प्रजाः किमुत नित्यसुखप्रयत्नाः ॥ ३४ ॥

मल्लारिभूपतिवधूरपि सत्वशीला लोकास्तदैव खलु सत्वगुणा अभूवन् ॥
माता यथा जगति लब्धगुणस्वभावा तस्याः प्रजापि च तथैव किल प्रसिद्धम् ॥
शिन्देमहादजिसुगोहदराणुजीनां सन्धिं विधातुमनघा स्वतुकोजिपुत्रम् ॥
सम्प्रेष्य तत्कलहदोषनिवर्तनाय हेतुर्बभूव करुणादिगुणैः स्वनिष्ठैः ॥ ३६ ॥

दृष्ट्वा द्वयोः कलहमात्रमपि प्रविश्य पादौ प्रसारयति दुष्टनृपो यथान्तः ॥
खण्डोजिपुत्रजननी स्तवनीयशीला तत्तादृशं प्रववृते न कदापि कर्तुम् ॥३७॥

कश्चित्स्म वक्ति तनयः प्रतिकूलवृत्तिः कार्यं मया किमिति भूपकुलेषु मान्ये ॥
श्रुत्वा तयोरनुनयं त्वरितं विधाय सम्प्रेषयत्स्वसदनं निजकौशलेन ॥ ३८ ॥

निःस्वार्थता चतुरतापि च नीतिमत्ता दीनान् विलोक्य पुरुवत्सलता च तस्याः॥
गम्भीरता च सुबहुश्रुतता यथास्वं तस्यां गुणा ददृशिरे निपुणैः सुधीभिः ३९॥

अन्योपकारकरणे जितसाधुचित्तां कीर्त्या तिरस्कृतकलानिधिरोचिषं ताम् ॥
दृष्ट्वैव सोपि सकलत्रसुतः कलावान् संरक्षणाय किमु विष्णुपदं[1] जगाम ४०॥

विश्वास्य पूर्वमहितान् समयं विलोक्य तेषां विनाशकरणं नृपतेरनीतिः ॥
मल्लारिणा सह सदा युधि हिण्डमाना विज्ञाय तां स्वयमसौ न किलाललम्बे ४१॥

युद्धोपयोगसकलं च नियम्य लेखसन्धिस्तथारिभिरलं त्वनया विजज्ञे ॥
तत्र प्रमाणमिदमेकमतिप्रसिद्धं तच्छासनेन विदधाति तुकोजिरायः ॥४२॥

१. आकाश वैकुण्ठ च।

राष्ट्राद्बहिःस्थितजना अपि तामहल्यां राष्ट्रीयकार्यकरणे बहु मानयन्तः ॥
तस्यै मतं च परिपृच्छ्य ततः स्वराष्ट्रे प्राचीकशत्सुपरिणामि हितार्थकारि ४३॥

युद्धं कदाचिदपि न प्रियमेव तस्यै यावत्प्रयत्नमथ सन्धिमसौ चकाङ्क्ष ॥
प्राप्ते पुना रिपुभिरेव रणप्रसङ्गे वीराङ्गनेव विबभौ नृपतेरहल्या ॥ ४४ ॥

किंवा बहूक्तिभिरहो जितशत्रवेऽपि द्विस्त्रिर्न्यवेदयदसौ नृपमाधवाय ॥
सैन्यं सुशिक्षितसुनिर्भयमग्रगामि नेदिष्ठमेव सततं परिरक्षणीयम् ॥ ४५ ॥

त्रिंशत्सहस्रमुत किञ्चिदहो तदूनं सैन्यं च यस्य समये स नृपो बलीयान् ॥
मन्येऽभितः खलबले चलितेऽत्र काले सैन्यं विना जगति निर्बलमेव राष्ट्रम् ॥

बर्वे उपाह्व इति कश्चन बाजिरावः पुण्ये स्थितः सततराघवपक्षनिष्ठः ॥
नाना सदा तमतिपीडयति स्म तस्मात्प्राप्तो महेश्वरपुरं जननीसमीपम् ॥४७॥

सेवां विधातुमनसं तमथो विलोक्य तत्राह्वयन्स चतुरो निजराजधानीम् ॥
तस्यै स्ववृत्तममलं प्रतिवक्तुकामस्तत्र स्थितो न च जगाम पुरीं स्वकीयाम् ॥४८

**अहल्योवाच—**

पत्रं त्वदर्थमवनीपतये विलिख्य ज्ञातं मया त्वमपि गच्छ चिरं न तिष्ठ ॥
यद्याह्वयत्यपि पुनश्च नृपाधिकारी द्रव्यं प्रदाय न च गच्छसि शोभनं न ॥४९॥

एकत्र राष्ट्रपुरुषः प्रथमं विधाय सेवां न चान्यनृपतिं भजते कदापि ॥
हेतुं विना त्यजति पूर्वनृपालकं यस्तं विश्वसत्पुरुषमेव कथं नृपोन्यः ॥ ५० ॥

राष्ट्रं मयानवरतं परिरक्षणीयं तेनापि तत्खलु तथा न च वेत्सि मूढ ॥
संस्थाय तत्र भवता चिरकालमेवं संपाद्यतां द्रविणमानसुखादि भूपात् ॥५१।

धैर्येण निष्कपटमेव यथाभिलाषं सेव्यस्य सेवकजनेन कृता च सेवा ॥
नो निष्फला भवति किन्तु फलप्रदात्री कीर्तिं करोति जगतीह पतिव्रतेव ५२।

**कविराह—**

द्वौ भ्रातरौ च सधनौ खरगोणपूर्यामास्तामपुत्रकबनारसतापिदासौ ॥
तावेकदा मृतिमितावथ तापिभार्या दातुं धनं द्रुतमगात्परिरक्षणाय ५३॥

अहल्योवाच—

मा तावदद्य हि धनं च तवास्ति बाले मा तावदद्य नृपकोशगतं विधेहि ॥
अन्यत्र कुत्रचिदये व्ययितं कुरुष्व संपादय त्वमथ येन महत्सुपुण्यम् ५४॥

यज्ञान् विधेहि महतीं जलपानशालां देवालयं सुरुचिरं च नदीप्रघट्टम् ॥
काशीगयाप्रमुखपावनतीर्थयात्रां दीनावनार्थममलं परमन्नसत्रम् ॥ ५५ ॥

धर्मात्परं जगति कीर्तिकरं न यस्माद्धर्मात्परं जगति सौख्यकरं न किञ्चित् ॥
धर्मात्परं त्रिदिवलोकहितावहं नो तस्मात्त्वमाचर बहुद्रविणेन धर्मम् ॥५६॥

आकर्ण्य तद्वचनमात्महितार्थकारि तद्वत्स्वभर्तुरपि शोभनकीर्तिकारि ॥
धर्मेण सर्वनिजपातकनाशकारि संसारिजीवजनसंसृतिदुःखवारि ॥ ५७ ॥

आगत्य सा च निजसंवसथं[1] महान्तं नद्यास्तटे सुरुचिरं व्यतनोत्प्रघट्टम् ॥
तस्मिंस्तथा सकलविघ्नविनाशकारि श्रीमद्गणाधिपतिमन्दिरमर्थकारि ॥५८॥

द्रव्यं प्रजा समवनीय नृपाय दत्ते सोऽपि स्वराष्ट्रगतसर्वधनाधिकारी ॥
एषा परं नृपवधूर्न तदाददाति कोऽयं महान् स्वयमवाप्तधने विरागः ॥ ५९ ॥

लोके धनाभ्युपगमो नृपतेर्गुणः स्यात्तस्मात्तदर्जनविधौ स यतेत नित्यम् ॥
प्राप्तं धनं त्यजति यः समुपेक्षमाणो निःसत्वमेव सहजं समवाप्नुयात्सः ॥६०॥

लोके जनाः प्रतिदिनं धनमर्जयन्ति क्लेशं तदर्थमपि भूरि च भुञ्जते ते ॥
चित्रं धनं परमियं परमप्रमोदात्संत्यज्य तस्य विनियोगमपि ब्रवीति ॥ ६१ ॥

मल्लारिभूपसदनं ननु पर्णशाला तत्रस्थभूपतिवधूर्मुनिरेव मूर्ता ॥
तस्याविरक्तिरतुला द्रविणेषु युक्ता मूर्तित्रयं मुनिजनैरभिवन्द्यमेतत् ॥ ६२ ॥

दानव्ययीकृतधनेऽपि जगत्यहल्या श्रीमन्महाशयजनेषु पुरःसरासीत् ॥
कीर्त्या धनेन च सदाचरणे न तस्यास्तुल्यत्वमाप न च कश्चन पूरुषोऽपि ॥६३॥

किंवाधिकेन वचनेनयदर्थवत्वं सार्थं पदं किमुभये जगतीतलेऽस्मिन् ॥
एकं प्रसिद्धतरसज्जनमुख्यवाण्यां किंवा परं नृपतिमल्लरिपोश्च वध्वाम् ॥ ६४ ॥

१. निवासस्थान ।

दुष्टेषु राजसु गते मयि तत्करेभ्यः स्वस्याप्यनर्थकतया च भवेद्विनाशः ॥
अर्थो ध्रुवं सकलराजगृहान्विहाय मल्लारिपुत्रवनितां शरणीचकार ॥ ६५ ॥

मल्लारिभूपतिवधूः परमर्थहानेऽप्येवंकृतेऽपि विपुलार्थमनाः सदासीत् ॥
संप्रार्थ्य याचकजनैरपि कल्पवल्ली रिक्तीकृतापि विपुलार्थयुता यथास्ते ॥६६॥

अन्यदप्याह-कश्चिच्छ्रीमान् वार्धुषि "देविचन्दो" मृत्युं प्राप्तो राजधान्यामपुत्रः
तत्रायासीदात्तसैन्यस्तुकोजी कं नाकृष्येत्कथ्यतां द्रव्यलोभः ॥ ६७ ॥

संकल्पितं वरतुकोजिसमागतानां विज्ञाय सर्वमथ वार्धुषिकस्य भार्या ॥
आत्मीयवित्तपरिपालनकामुका सा क्षेत्रे महेश्वरमहो शरणञ्जगाम ॥६८॥

विज्ञाय वार्धुषिकयोषिदभद्रवृत्तं सन्तप्यमानमनसा सहसाप्यहल्या ॥
तस्या अवोचदयि भर्तृधनाधिकारस्त्वय्येव तद्व्ययमहो भवती करोतु॥६९

तुकोजिनं प्रत्याह—

मद्राजधान्यां न कदाचिदेवं भयप्रदाज्ञा भवता विधेया ॥
प्रजा मदीया न निपीडिता स्याद्ध्रासस्तथा वै भवता विधेयः ॥७०॥

ग्रामे सिरोंजे किल खेमदासभार्या स्वयं दत्तकमाजिहीर्षुः ॥
विलोक्य तत्राधिकृतो न तस्यै नियोजयामास करं विनैव ॥७१॥

आप्तेष्टवर्गसहिता वनिता ततः सा तूर्णं स्वदेशजननीं शरणं जगाम ॥
श्रुत्वा वचः सकलमिष्टमसावहल्यापुत्रं गृहीतुमथ तत्क्षणमादिदेश ॥ ७२ ॥

अङ्के निधाय तनयं स्वयमेव तस्मै संभोज्य वस्त्रशिबिकावसनानि दत्वा ॥
तान्प्रैरयत्स्वनगरं परमादरेण त्यागस्य मूर्तिरबला जननी जनस्य ॥ ७३ ॥

**इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते श्रीमदहल्याचरिते राज्यव्यवस्थावर्णनं नाम दशमः सर्गः।**

१. शालिनीवृत्तम्। २. वसन्ततिलकावृत्तम्। ३. उपजातिवृत्तम्॥

# एकादशः सर्गः ।



गुरुरुवाच—

कार्यक्षमत्वचतुरत्वमुखान् गुणान् ये बह्वादरेण हृदये विनिवेशयन्ति ॥
तानेव मानवजनान् कुशलान् परीक्ष्य कार्ये न्ययोजयदसौ विविधे स्वराष्ट्रे ॥१॥

तदेवाह-गोविन्दनामकनरश्चतुरः सुशीलो राज्ञ्या तया प्रमुखमन्त्रिपदे नियुक्तः॥
गङ्गाधरस्य तनुजो यशवन्तनामा पुण्ये पुरे नृपसभाव्यवहारजीवी ॥ २ ॥

द्वेषो नरे न च कुलेऽपि कदापि तस्यास्तत्स्थेषु किन्तु जननिन्दितदुर्गुणेषु ॥
आशीविषेषु मनुजस्य लघुष्वपि स्याद्द्वेषो महत्स्वपि न निर्विषडुण्डुभेषु ॥ ३॥

युद्धं करग्रहणमेव तुकोजिकार्यं मातुः प्रजावनकृते परमप्रयत्नः ॥
विद्वद्भिरेव परमार्थविचारचर्चा कार्यं तुकोजिविषये स्वसहायता च ॥ ४ ॥

टिपुसुलतानविषये—

धूर्तष्टिपुः परमनः सुशनैः प्रविश्य बाह्यं परं मृदुवचा हृदये कठोरः ॥
सम्प्रेष्य पत्रमनुकूलमथ प्रयत्नाद्यो वञ्चयेदिममसंशयमेव विद्धि ॥ ५ ॥

बाह्ये प्रफुल्लवदनोऽप्युररीकृतागाः सेवानतिस्तुतिपरो निजदैन्यदर्शी ॥
अन्तःपरं खलु रिपुर्मनसा क्षुरेण छिद्रं विलोकयति हन्ति च निर्घृणत्वात्॥६

तस्मात् तुकोजिनं प्रत्याह—

नित्यं प्रमादरहितो भव, भेदकारि श्राव्यं वचोऽपि न च कस्यचिदर्थयुक्तम् ॥
भेदादिसर्ववचनानि पुरःसुखानि यत्नप्रलब्धकुलकीर्तिविनाशकानि ॥ ७ ॥

विज्ञायतां रिपुवचो न कदापि सत्यं स्वस्मै तदीप्सितफलं न कदापि दद्यात् ॥
लोके हि शारदघनाघनगर्जनं तद्भ्रांत्यावहं परमहो न जलप्रदायि ॥ ८ ॥

१. वसन्ततिलकावृत्तम् ।

शत्रोर्वचो मृदुपरं न हिताय विद्धि दूरं ततोऽपि किल दूरतरश्च लेखः ॥
विज्ञाय चैतदखिलं हितशत्रुकृत्यं योग्यं हितं यदधुना खल तद्विधेहि ॥९॥

युद्धे परं बलवता रिपुणा विधेये नान्यो हि कूटसदृशो बलवानुपायः ॥
तादृक्स्वयं समिति यादृगवस्थशत्रुर्न्यायः परं बलवता न च किन्तु कूटम् १०॥

इन्द्रादिभिर्नमुचिवालिमुखाश्च दैत्याः कूटं विधाय निहतास्समराङ्गणेषु ॥
तस्माद्भवद्भिरपि सर्वजनैर्ध्रियन्तां यद्राजनीतिवचनानि मनःसु नित्यम् ॥११॥

आनीय चेतसि सपत्नकृतापमानं पृष्ठे विधाय च परप्रथितं स्वमानम् ॥
यः साधयेत्स तु नृपः कुशलः स्वकार्यं विध्वंसयेत्स तु जनेषु भवेद्विमूढः॥१२॥

यो वञ्चयेद्बहुलभेदकरैर्वचोभिर्दूरीकुरुष्व तमये क्षणमात्रतस्त्वम् ॥
कृच्छ्रेषु केऽपि न पतन्तु कदापि तादृग्वर्तस्व चावहितचित्तमतः सदैव॥१३॥

जीवे गतेऽपि न च शूरनृपस्य हानिर्देहे स्थितेऽपि यदि लब्धयशोविनष्टिः ॥
तां हानिमेव मनुते महतीं नृपालः सूक्ष्मं विचार्य च ततः सकलं कुरुष्व ॥१४॥

एवं सदा स्वमतमेव सति प्रसङ्गे सन्धौ समित्यपि मुनिर्भयमानसा सा ॥
पुण्ये पुरेऽपि बहुमन्त्रिविराजितेऽपि विद्वद्गुतेऽपि विनिवेदयति स्म राज्ञे॥१५॥

श्रीरङ्गपत्तनमुखेष्वखिलेष्वहल्या राष्ट्रेषु च स्वयमसौ व्यवहारवृत्तीन् ॥
नित्यं न्ययोजयदथ स्वकरं ग्रहीतुं योग्यान्नरानपि सुकोमलमानसांश्च ॥१६॥

मायेव यज्जगदिव स्वनियोजितैस्स्वैर्मूर्तैरिवातनुत सा निजराष्ट्रकार्यम् ॥
माया समस्तजनताभवमज्जनाय हेतुश्च सा परमहो भवमोचनाय ॥ १७ ॥

कश्चिच्च मन्त्रिकुशलो हरिपन्तफड्के खण्डोजिभूपवनिताकुशलं बुभुत्सुः ॥
आत्माभिलाषविषयं च मनाक् प्रवक्तुं क्षेत्रं जगाम च महेश्वरनामधेयम् १८॥

अन्यत्स्वकार्यमथ साधयितुं महान्तं यत्नं चकार परमत्र न साधितं तत् ॥
तस्मात्स्वयं सकलमाल्वलोकमात्रे पर्यायतः स च जगौ निजमानसार्थम् १९॥

१. अहल्यायाश्चातुर्यं दर्शयितुमन्यं प्रसङ्गमाह ।

अन्यार्थपर्यवसितं वचनं च तस्य श्रुत्वा तमाह किल सा चतुराग्रगण्या ॥
जानामि नैव भवतो वचनं यथार्थं स्त्रीत्वादनध्ययनतो धनगेहजत्वात् ॥२०॥

यत्सर्वदा जगति मूढतमं मनुष्यं कुर्वन्ति चास्मदुपमेयपदं महान्तः ॥
तस्माद्भवद्वचनमेतदपूर्वभूतं नाज्ञासिषं स्वयमतः कुशलेन वाच्यम् ॥२१॥

विज्ञाय तस्य मुखतः परमर्थहीनं स्वार्थं सिसाधयिषु[1] केवलमेव वाक्यम् ॥
मल्लारिसूनुवनिता जनितातिमर्षा प्रोवाच तं बुधजनैरपि शंसनीयम् ॥२२॥

स्वार्थान्धकारपरिलुप्तविचारदृष्टिं स्वस्यौदने च घृतसूपमथाह्वयन्तम् ॥
वृत्तिं बुभुत्सुमखिलं च मनोगतं मे प्राप्तं भवन्तमिह वेद्मि मदाश्रयाय ॥२३॥

बुद्ध्या बृहस्पतिसमो हि भवान् प्रसिद्धः शूरः षडाननसमो बलवद्बलिष्ठः ॥
राजानुकूलवचनं परिभाषमाणः [2]स्थाने वचो न तव तत्खलु हीनवृत्ति ॥२४॥

शिन्देमहादजिमहीपतिमप्यहल्या युक्तैर्वचोभिरपि भीषयति स्म काले ॥
सत्यप्रिया च कुशला च जनेषु मूर्तिर्युक्तं बिभेति न नराय वचः प्रवक्तुम्॥२५॥

स्वार्थो न यत्र च मनागपि दम्भलेशो नो वा हिमांशुकरसन्निभकीर्तिलिप्सा ॥
भीतिश्च का जगति निस्पृहमानसाया वक्तुं महान्तमथवा वयसा च भूपम्॥२६॥

[3]त्वां मातरं सकलराष्ट्रहितैकदक्षां नो चेत्स्वबुद्ध्यभिमतां स्वकृतिं तुकोजी ॥
श्रीमन्महादजिमतां भजते स्म तस्माद्योद्धुं क्रुधा प्रववृते नृपखण्डुपत्नी ॥२७॥

**अहल्योवाच--**

आदाय सैनिकगणं सकलं भवन्तो युद्धाय साकमभियान्तु तुकोजिनापि ॥
नैवाहमीषदपि यत्र बिभेमि यस्मान्मल्लारिभूपतिवधूः करवाल[4]हस्ता ॥ २८ ॥

शूराश्च पूगफलवत्समदन्ति"शिन्दे"नारीर्भवन्त इति वोऽतिमहत्प्रसिद्धिः ॥
नास्तीदमत्र परमेशकृपाप्रसादाद्युद्धं विधाय शपथेन जयं लभेय ॥ २९ ॥

१. साधयितुं इच्छु। २. तव वचनं हीनवृत्ति न तदेतत्खलु स्थाने इत्यन्वयः। ३. युद्धसन्नहने हेतुमाह। ४. खड्गहस्ता।

वान्तं भवद्भिरपि चित्तगतं च पित्तमन्यैर्दुरूहमपि दुष्टविचाररूपम् ॥
निर्यान्तु योद्धुमनयाबलया समं श्रीमार्तण्डपादशपथोऽस्तु यदन्यथा स्यात् ३०

आकर्ण्य तद्वचनमार्यजनाभिनिन्द्यं शौर्येण पूर्णमपि भूपसुताङ्गनायाः ॥
तत्सोपहासवचनं प्रथमं निगद्य तां सान्त्वयन्नथ जगाम तदाज्ञया सः ॥३१।

अन्तर्बहिः कलुषितं मधुरं च वाक्यं ज्ञात्वा तदुत्तरमपि स्वयमेव दत्वा ॥
राष्ट्रे च सा चतुरतां महतीं प्रदर्श्य नित्यं वशीकृतसमस्तजना न्यवात्सीत् ३२

अपि चोवाच —

श्रीमन्महानृपतियोधगणश्च पुण्यादाख्यातकीर्तिमहिमाथ समस्तशूरैः ॥
आदाय सैन्यमतुलं रिपुतो महान्तं लब्धुं प्रयत्नमकरोद्वसईविभागम् ॥३३॥

सैन्यं च तत्र निहतं विजयोपलब्धैर्द्रव्यं तदर्थमपि तैर्व्ययितं नृपालैः ॥
नासीत्परन्तु परमेशकृपाकटाक्षप्राप्तिस्ततः समभवन्महती च हानिः ॥३४॥

साम्मुख्यमेति जगदीश्वर एव यस्य मालां समर्पयति तस्य जयस्य कण्ठे ॥
योऽङ्गीकरोति जगदीशपराङ्मुखत्वं सन्तिष्ठते च विजयः खलु तस्य पृष्ठे ३५।

भुक्तिं वयं सवनशः प्रतिलब्धमानाः सर्वेऽधिकारपदवीं प्रतिपद्यमानाः ॥
धान्येन, सैनिकगणेन, धनेन, वा यत्साहाय्यकं न तदकार्ष्म सति प्रसङ्गे॥३६।

तत्र प्रधानगणमध्यगतो न कोऽपि शूरेण कार्यमधुना किमुतैककेन ॥
देहेऽतिदुःखितदशामभिपद्यमाने क्षेमाय तस्य सकलावयवा यतन्ते ॥ ३७।

राष्ट्रं कलेवरमिदं जगतीतलेऽस्मिन्नङ्गानि तत्र किल माण्डलिकाः समग्राः ॥
पुष्ट्यर्थमौषधमिदं परराष्ट्रखण्डं भक्ष्यं तदेव सकलावयवैश्च पुष्ट्यै ॥ ३८॥

महादजी उवाच —

न प्रेर्यते निजबलं नृपरक्षणार्थं किंवा फिरङ्गरिपुगात्रविदारणाय ॥
केनापि तत्र सचिवादिपदं गतेन मल्लारिपुत्रवनिते किमतो विधेयम् ॥ ३९।

१. पुणनामकनगरात्।

स्वार्थी परार्थी चतुरो नरश्च नैकत्र राष्ट्रे कुशलस्य तिष्ठेत् ॥
आत्मम्भरिः केवल एक एव यतः परो राष्ट्रहितैकदक्षः ॥ १८ ॥

न तिष्ठतो हि प्रखरौ कृपाणौ द्वावद्वितीये सुदृढेऽपि कोशे[1] ॥
[redacted] घर्षणतो यदग्निस्तदाश्रयं कोशमपि प्रहण्यात्[2] ॥ १९ ॥

साध्वीमहल्यामथ राघवेन्द्रः पदच्युतां कर्तुमपि प्रवृत्तः ॥
तत्पक्षमाश्रित्य तुकोजिरायः स्वराष्ट्रमेषोऽध्यवसत्सदैव ॥ २० ॥

पन्ताह्वयौ माधवराघवेन्द्रौ साध्वी तयोर्माधवबालचित्ता ॥
तुकोजिसेनाधिपतिश्च मेने श्रीराघवं केवलशीलभेदात् ॥ २१ ॥

यद्यप्यहल्यां जननीमिव स्वाममंस्त सेनाधिपतिस्तुकोजी ॥
श्रीराघवेन्द्रादिपरोपदेशात्तयाप्ययुक्तं कलहं चकार ॥ २२ ॥

बुधग्रहो[3] यद्ग्रहसङ्गतस्स्यात्फलं तथैव प्रददाति नृभ्यः ॥
धृत्वा नृपेन्द्राग्रहमप्यसौम्यः स मातरं पीडयति स्म चित्रम् ॥२३ ॥

यदि स्वमाताश्रितकल्पवल्ली नेदिष्ठकल्याणकरी तथापि ॥
वशङ्गतो यो नृपराघवस्य तद्दुर्विधिर्हेतुरहो ब्रवीमि ॥ २४ ॥

व्यस्तं समस्तं परमप्रशस्तं व्ययं स सेनाधिपतिश्चकार ॥
श्रीराघवेन्द्रप्रमुखानुशिष्टो मेने जनन्या न कृतोपकारम् ॥ २५ ॥

एवं परप्रत्ययनेयबुद्धिता स्वमूढता दुष्टजनानुशासता ॥
तथैव चित्तास्थिरता तुकोजिनि नूनं समस्ता फलिता तदानीम् ॥२६॥

१. म्यान इति महाराष्ट्र्याम् । २. विनाशयेत् । ३. बुधो नाम ग्रहो यद् ग्रहसङ्गतस्तत्फलं तच्छुभाशुभवज्ज्ञेयम् । परन्तु तुकोजी राघोबादादा नामकस्य अग्रहत्वेपि पक्षे (तदाग्रहेणेति) स्वयमसौम्योऽपि स्वमातरं पीडयति स्म तच्चित्रमिति भावः ।

परन्तु सा मालवदेशमाता सोढ्वा समस्तांश्च तदीयमन्तून् ॥
तं स्थापयामास बलाधिकारे कोपः सतीनामपि मङ्गलाय ॥ २७ ॥

[1]अन्यानि सूक्ष्माण्यपि कारणानि क्रोधाय मातुः किल सम्बभूवुः ॥
क्षान्त्वाप्यभूदाश्रयदानशीला छाया सुखायैव तरोर्हि [2]तक्ष्णः ॥२८॥

[3]सैन्यव्यये वान्यविधौ तुकोजी बुद्धेर्जडत्वात्खलु केवलाज्ञः ॥
यतस्तितिक्षोरपि राजमातुः पुनःपुनस्तत्कलहप्रसङ्गः ॥ २९ ॥

[1]मूढोऽधिकारी यदि राष्ट्रमध्ये तस्यासमन्ताद्यदि वञ्चकाः स्युः
तद्राष्ट्रनाशः क्षणमात्रतः स्याद्देवस्तदर्थे न च कोऽप्युपास्यः ॥३०॥

[3]सर्वे जनास्तं कलहं विबुध्य शक्ता बभूवुर्न विहन्तुमत्र ॥
शतं प्रदीपास्तिमिरं हरन्तो न सूर्यचन्द्रौ प्रविभासयेयुः ॥ ३१ ॥

महादजी शूरवरः समेत्य हितैर्वचोभिः समशिक्षयत्तम् ॥
अभेदवृत्तिःपरमार्थदा स्यान्नैतादृशी कापि फलोन्मुखान्या ॥ ३२ ॥

विपक्षे बाधकमाह—

भेदेन चान्यो विशति स्वराष्ट्रे भेदेन नेदिष्ठजनैर्वियोगः ॥
भेदेन चित्तेषु दुरन्तचिन्ता भवेच्च भेदेन शरीरहानिः ॥ ३३ ॥

भेदेन भूपस्य धनादिनाशो भेदेन कीर्तिश्च विनाशमेति ॥
भेदो हि कीटः [4]करपत्रकास्यः शनैःशनैर्[5]जक्षति वंशकाष्ठम् ॥३४॥

भेदेन मित्रं भवतीव वैरी भेदेन विद्वान् भवतीव मूर्खः ॥
भेदेन भार्या भवतीव वेश्या भेदो महान्तं कुरुतेऽप्यनर्थम् ॥३५॥

१. इन्द्रवज्रावृत्तम् । २. तक्षा सुतार । ३ उपजातिवृत्तम् । ४. करपत्रं (करवत) आस्ये—मुखे यस्य सः । ५. भक्षयति-विनाशयतीत्यर्थः ।

स्वार्थी परार्थी चतुरो नरश्च नैकत्र राष्ट्रे कुशलस्य तिष्ठेत् ॥
आत्मम्भारिः केवल एक एव यतः परो राष्ट्रहितैकदक्षः ॥ १८ ॥

न तिष्ठतो हि प्रखरौ कृपाणौ द्वावद्वितीये सुदृढेऽपि कोशे ॥
परस्परं घर्षणतो यदग्निस्तदाश्रयं कोशमपि प्रहण्यात् ॥ १९ ॥

साध्वीमहल्यामथ राघवेन्द्रः पदच्युतां कर्तुमपि प्रवृत्तः ॥
तत्पक्षमाश्रित्य तुकोजिरायः स्वराष्ट्रमेषोऽध्यवसत्सदैव ॥ २० ॥

पन्ताह्वयौ माधवराघवेन्द्रौ साध्वी तयोर्माधवबालचित्ता ॥
तुकोजिसेनाधिपतिश्च मेने श्रीराघवं केवलशीलभेदात् ॥ २१ ॥

यद्यप्यहल्यां जननीमिव स्वाममंस्त सेनाधिपतिस्तुकोजी ॥
श्रीराघवेन्द्रादिपरोपदेशात्तयाप्ययुक्तं कलहं चकार ॥ २२ ॥

बुधग्रहो यद्ग्रहसङ्गतस्स्यात्फलं तथैव प्रददाति नृभ्यः ॥
धृत्वा नृपेन्द्राग्रहमप्यसौम्यः स मातरं पीडयति स्म चित्रम् ॥ २३ ॥

यदि स्वमाताश्रितकल्पवल्ली नेदिष्ठकल्याणकरी तथापि ॥
वशङ्गतो यो नृपराघवस्य तद्दुर्विधिर्हेतुरहो ब्रवीमि ॥ २४ ॥

व्यस्तं समस्तं परमप्रशस्तं व्ययं स सेनाधिपतिश्चकार ॥
श्रीराघवेन्द्रप्रमुखानुशिष्टो मेने जनन्या न कृतोपकारम् ॥ २५ ॥

एवं परप्रत्ययनेयबुद्धिता स्वमूढता दुष्टजनानुशासता ॥
तथैव चित्तास्थिरता तुकोजिनि नूनं समस्ता फलिता तदानीम् ॥ २६ ॥

१. म्यान इति महाराष्ट्र्याम् । २. विनाशयेत् । ३. बुधो नाम ग्रहो यद् ग्रहसङ्गतस्ततःफलं तच्छुभाशुभवज्ज्ञेयम् । परन्तु तुकोजी राघोबादादा नामकस्य अग्रहत्वेपि पक्षे ( तदाग्रहेणेति ) स्वयमसौम्योऽपि स्वमातरं पीडयति स्म तच्चित्रमिति भावः ।

परन्तु सा मालवदेशमाता सोढ्वा समस्तांश्च तदीयमन्तून् ॥
तं स्थापयामास बलाधिकारे कोपः सतीनामपि मङ्गलाय ॥ २७ ॥

[1]अन्यानि सूक्ष्माण्यपि कारणानि क्रोधाय मातुः किल सम्बभूवुः ॥
क्षान्त्वाप्यभूदाश्रयदानशीला छाया सुखायैव तरोर्हि त[2]क्ष्णः ॥२८॥

[3]सैन्यव्यये वान्यविधौ तुकोजी बुद्धेर्जडत्वात्खलु केवलाज्ञः ॥
यतस्तितिक्षोरपि राजमातुः पुनःपुनस्तत्कलहप्रसङ्गः ॥ २९ ॥

[1]मूढोऽधिकारी यदि राष्ट्रमध्ये तस्यासमन्ताद्यदि वञ्चकाः स्युः
तद्राष्ट्रनाशः क्षणमात्रतः स्याद्देवस्तदर्थे न च कोऽप्युपास्यः ॥३०॥

[3]सर्वे जनास्तं कलहं विबुध्य शक्ता बभूवुर्न विहन्तुमत्र ॥
शतं प्रदीपास्तिमिरं हरन्तो न सूर्यचन्द्रौ प्रविभासयेयुः ॥ ३१ ॥

महादजी शूरवरः समेत्य हितैर्वचोभिः समशिक्षयत्तम् ॥
अभेदवृत्तिःपरमार्थदा स्यान्नैतादृशी कापि फलोन्मुखान्या ॥ ३२ ॥

विपक्षे बाधकमाह—

भेदेन चान्यो विशति स्वराष्ट्रे भेदेन नेदिष्ठजनैर्वियोगः ॥
भेदेन चित्तेषु दुरन्तचिन्ता भवेच्च भेदेन शरीरहानिः ॥ ३३ ॥

भेदेन भूपस्य धनादिनाशो भेदेन कीर्तिश्च विनाशमेति ॥
भेदो हि कीटः करपत्रका[4]स्यः शनैःशनैर्जक्ष[5]ति वंशकाष्ठम् ॥३४॥

भेदेन मित्रं भवतीव वैरी भेदेन विद्वान् भवतीव मूर्खः ॥
भेदेन भार्या भवतीव वेश्या भेदो महान्तं कुरुतेऽप्यनर्थम् ॥३५॥

१. इन्द्रवज्रावृत्तम्। २. तक्षा सुतार। ३ उपजातिवृत्तम्। ४. करपत्रं (करवत) आस्ये–मुखे यस्य सः। ५. भक्षयति-विनाशयतीत्यर्थः।

तत्र—यत्रैकमत्यं सदने विभाति तत्रैव लक्ष्मीः स्वपदं निधत्ते ॥
शुद्धांशुगौरापि च तत्र कीर्तिर्विस्तारमायात्यनिशं सुखेन ॥ ३६ ॥

यत्रैकमत्यं किल तत्प्रसिद्धं श्रीमत्कुलं गोकुलवत्पृथिव्याम् ॥
यत्रैकमत्येन सदैव वासो न तत्र शत्रोर्भवति प्रभावः ॥ ३७ ॥

य एकचित्ता वपुषा विभक्ता गृहेषु राष्ट्रेषु जना विभान्ति
ये व्यक्तितः स्युर्लघवः पदार्थास्ते सङ्घरूपात्पृथवो भवन्ति ॥३८॥

भृत्यप्रभृत्येव नृपालकस्य राष्ट्रे विभात्येव यदैकमत्यम् ॥
तदा रिपोः सूक्ष्मकुशाग्रबुद्धेरपि प्रवेशो न भवेत्कदापि ॥३९॥

तिष्ठैकमत्येन ततस्तुकोजिन् मन्यस्व देवीं जननीमहल्याम्
श्रुतिं तदाज्ञां परिपालयस्व लभस्व सौख्यं परमं प्रपञ्चे ॥ ॥४०॥

संशोभतेऽनेककुटुम्बकं गृहं यद्वा नभोऽनेकसुतारकाकुलम् ॥
किंवा सरोऽनेकतिमिङ्गिलैर्युतं यद्वा वनं नैकमहीरुहान्वितम् ॥ ४१ ॥

किंवारविन्दं मकरन्दसंकुलं गुञ्जन्मिलिन्दैर्बहुभिर्विराजते ॥
राष्ट्रं तथानेकविधैः कुलादिभिः शूरैः सदा कीर्तिफलावलम्बिभिः ॥४२॥

तस्मात्तुकोजिन् कलहं न कुर्यान्मात्रा समं त्वं च सुखेन जीव्याः ॥
सर्वाः प्रजा एकमतेन रक्ष्या लभ्या च कीर्तिर्महती जगत्याम् ॥ ४३ ॥

आवामुभौ भिन्नपदस्थितावपि मल्लारिराजोऽहमथैकमानसौ ॥
अतोऽस्मदीयं न विजेतुमभ्ययाद्राज्यं हि शूरः सबलोऽपि शात्रवः ॥४४॥

मातोप्यहल्या न जहाति पश्य साध्वी रिपोस्त्वां च वशीभवन्तम् ॥
हिताहिते योग्यमयोग्यमेवं सुदूरदृष्ट्या सकलं हि वेत्ति ॥ ४५ ॥

१. उपजातिवृत्तम् । २. इंद्रवंशावृत्तम् । ३. इंद्रवज्रावृत्तम् ।

न शोभते गुप्तसपत्नसौधं महन्निधानं सभुजङ्गवासम् ॥
सुस्वादु किंवा विषमिश्रमन्नं वाक्यं सुशब्दं परमर्मभेदि ॥ ४६ ॥

क्षमापयस्व प्रणतिं कुरुष्व त्वमन्वहं मालवदेशमात्रे ॥
सुतोऽपराधी न च केन रक्ष्यो मात्रा विना बाल महीतलेऽस्मिन् ॥४७॥

त्वयापराधान् विहितानेकान् सहिष्यते मूर्तिमती क्षमा सा ॥
ततस्त्वमामृत्यु भजस्व भक्त्या तां मातरं निर्मलमानसेन ॥ ४८ ॥

स्वदेशनिष्ठाः सकलाः प्रजा या नक्तंदिवं पालयितुं प्रयत्नम् ॥
करोति तां त्वं विजहासि तस्मान्न त्वत्समः स्याज्जगतीह मूर्खः ॥ ४९ ॥

लभेत मित्रं द्रविणैर्जगत्यां भार्यां सुतं गेहमथावनीं च ॥
सनिर्मलप्रेम परैकवस्तु परन्तु नो मातृपदस्य वाच्यम् ॥ ५० ॥

माता वदेत्तत्तु विधत्स्व नित्यं मा तावदेनां विजहीहि मूर्ख ॥
लोके सुखार्थं निजदेशतस्तां जनाः समागत्य समाश्रयन्ति ॥ ५१ ॥

[1]नास्ति मालवसमो भुवि देशो नास्ति भूपतिवधूसदृशी स्त्री ॥
वन्यमान्यजनवृन्दसुवन्द्या शौर्यधैर्यगुणशालिषु गण्या ॥ ५२ ॥

आश्रितस्य च मनोरथपूर्तौ ख्यातिमाप भुवि कल्पपलाशी[2] ॥
नाश्रिताश्रितजनेषु समाना स्यान्न काचिदबला सदृगस्याः[3] ॥ ५३ ॥

[4]त्वां मन्दबुद्धिर्न च शत्रुमित्रमनोगतार्थानखिलांश्च वेत्सि ॥
तस्माज्जनन्याश्रयमातनुष्व बालस्य युक्तं तदिति प्रसिद्धम् ॥ ५४ ॥

श्रीमन्[5]मालवदेशमातरमये मा मुञ्च सौख्यास्पद- ॥
मेतन्मे पृतनापते हिततरं सारं मदीयं वचः ॥

१. स्वागतावृत्तम् । २. कल्पवृक्षः । ३. सदृशी । ४. उपजातिवृत्तम् ।
५. शार्दूलविक्रीडितं ।

रत्नं शुद्धममूल्यमाप्तमपि चेदीषत्प्रयत्नाद्विना ॥
त्यक्त्वा बालक मा गृहाण सुखदं स्थूलं जडं प्रस्तरम् ॥ ५५ ॥

मालवानां मातरं त्वं यदि त्यक्षसि मोहतः ॥
संत्यज्य प्राप्तममृतं क्षुधितो मूर्ख तिष्ठसि ॥ ५६ ॥

अहल्यां त्यक्षसि त्वं चेद्धल्यां वृत्तिं भजिष्यसि ॥
कर्णौ कराभ्यां तद्धृत्वा जननीमभिवादय ॥ ५७ ॥

मातरं नाश्रयेस्त्वं चेन्मा तरिष्यसि संसृतेः॥
तस्मात्तदाश्रयेण त्वं सुखं जीव शतं समाः ॥ ५८ ॥

राघवेन्द्रजनभाषणमेतन्मोहकारि न च मंगलकारि ॥
मालवेश्वरसखोऽहमिदानीं तुभ्यमेतमुपदेशमकार्षम् ॥ ५९ ॥

राघवेन्द्रादिकान् भाषापटून्विद्धि न सन्मतान् ॥
सन्मतां तावकीं मान्यां मातरं च समाश्रय ॥ ६० ॥

ततः—कल्याणकारिणीं राज्ञीं जननीं जननीतिदाम् ॥
चरणावुपसङ्गृह्य तुकोजी शरणं ययौ ॥ ६१ ॥

इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते
श्रीमदहल्याचरिते तुकोजीक्षमापनं नाम द्वादशः सर्गः ।

१. अनुष्टुब्वृत्तम् । २. स्वागतावृत्तम् ।

# त्रयोदशः सर्गः



शिष्य उवाच—

श्रीसद्गुरो ज्ञानमूर्ते शिष्यशिक्षाबृहस्पते ॥
सुधीभिरादृतमते सर्वशास्त्रसदागते ॥ १ ॥

जगन्मातुरहल्याया आर्यायाः शास्त्रसंमताम् ॥
दिनचर्यां निगद मे श्रोतुमुत्सुकचेतसे ॥ २ ॥

श्रीगुरुरुवाच—

धनागारे प्रजातापि विख्याता शुद्धमानसा॥
सदाचाररता सासीद्धर्ममूर्तिरिवापरा ॥ ३ ॥

कृष्णेवं कृष्णवर्णा सा हरिणीव शुभेक्षणा ॥
जलजारुणकिञ्जल्कसुकपोलारुणाधरा ॥ ४ ॥

नीलाञ्जनगिरिस्पर्धिकेशपाशधरा वरा ॥
रोचिष्मतीन्दुलेखेव प्राय आसीन्महेश्वरे ॥ ५ ॥

कृशापि प्रौढधिषणा कृष्णापि विमला च सा ॥
चित्रमिन्दूरस्थितापि स्वस्थाप्यासीन्महेश्वरे ॥ ६ ॥

शुभ्रवस्त्रोपसंख्याना शुभ्रासनपरिग्रहा ॥
नितान्तशान्तस्वान्तासीदनसूयेव सर्वदा ॥ ७ ॥

जनेष्वलीकवचनेष्वग्निज्वालेव भामिनी ॥
आसीत्तदा तदग्रेऽपि न कोऽपि स्थातुमीशिता ॥ ८ ॥

१. अनुष्टुब्वृत्तम् । २. द्रौपदीसदृशी । ३. कमलरक्तकेसरवत् रक्तौ कपालौ यस्याः सा । ४. समर्थः ।

अपराधिनमालोक्य परं वा स्वीयमेव वा ॥
अशिषत्समदृष्ट्या सा जनकल्याणहेतवे ॥ ९ ॥

तमेव प्रसङ्गमाह—तुकोजिपुत्रो मल्लारिरविनीतः स्वचारतः ॥
अहल्योदन्तजिज्ञासुः प्रेषयत्तं च तद्गृहे ॥ १० ॥

विज्ञाय सर्वं साहल्या तुकोजितनयस्य तत् ॥
आत्मीयानुचरैर्लोकैः पशुतोऽमताडयत् ॥ ११ ॥

खञ्जीभूतो यतः सोऽथ प्रक्षिप्तो बन्धनालये ॥
परं क्षमैव सा लोकान् सद्वृत्यर्थमशिक्षयत् ॥ १२॥

क्रोधो हि घातकीवृत्तिरिति सद्भिः प्रगीयते ॥
अस्याश्चित्रमहल्याया स कार्याय न हानये ॥ १३ ॥

अन्तःशान्ता बहिःक्रुद्धा शिशौ मातेव सर्वदा ॥
प्रजासु वर्तमाना सा निःस्वार्थहृदया बभौ ॥ १४ ॥

नियतं च प्रतिदिनं प्रत्युत्थायारुणोदये ॥
प्रातर्विधिं विधायाथ सदाशिवमचिन्तयत् ॥ १५ ॥

ईशस्तुतिपरान् श्लोकान् गीतानि विविधानि च ॥
जगाद सुस्वरं नित्यं भक्त्याकलितमानसा ॥ १६ ॥

नवैर्नवैस्स्तवैर्भक्त्या गायन्ती प्रत्यहं मुदा ॥
भूभृद्भूवल्लभं शम्भुं भजन्ती समतोषयत् ॥ १७ ॥

ततः श्रीशङ्करं मातरुत्थापयितुमुत्सुका ॥
दयामूल्यं जिघृक्षन्ती वन्दिनीव परा बभौ ॥ १८ ॥

१. पशुमारममारयत् ।

कर्मकाण्डस्य वर्मेव शर्मदं नर्मदाजलम् ॥
स्नानार्थमुपयुञ्जाना प्रायोऽवात्सीन्महेश्वरे ॥ १९ ॥

भागीरथ्यादितीर्थानामष्टकानि पठन्त्यसौ ॥
भक्त्या त्रिविधतापान्वै स्नाति यापयितुं ध्रुवम् ॥ २०॥

ततः सुधांशुरोचिष्णु पर्यधाद्विशदांशुकम् ॥
येन शम्भोर्मस्तकस्थचन्द्रलेखेव सा बभौ ॥ २१

भूतेशं तुहिन[1]क्ष्माभृत्प्रभं शुभ्रांशुभाल[2]कम् ॥
श्रीशम्भुं भावयामास[3] भावितैरुपचारकैः ॥ २२ ॥

तानुपचारानाह — आवाहनमुखानेकानुपचारान् यथायथम् ॥
प्रत्यर्पयच्छिवपदाम्भोजभृङ्गी सती च सा ॥ २३ ॥

चरणौ खण्डपरशोरखण्डमनुसेविनी ॥
मालवानां पालयित्री दासीवासीन्महेश्वरे ॥ २४ ॥

सदा शिवं चिन्तयन्ती योगिनीव परैर्जनै[4]:॥
लक्षितासीदहल्या सा वृतपद्मासनासना ॥२५॥

जपन्ती शिवमन्त्रं सा तापयन्ती वपुर्व्रतैः ॥
उपवासान् बहून्नित्यं कुर्वन्ती प्रीतिमानसा ॥२६ ॥

ततो व्यासादिव पराद्वक्तुः पौराणिकादसौ ॥
सकलानि पुराणानि क्रमात्प्रत्यहमाशृणोत् ॥ २७ ॥

शीलवद्भ्यो द्विजातिभ्यो विद्वद्भ्यः प्रत्यहं ततः ॥
गोहिरण्यादिदानानि समाहूय सती ददौ ॥ २८ ॥

१. हिमाद्रिसदृशगौरवर्णम् । २. शुभ्रांशुः श्वेतकिरणश्चन्द्रः भाले मस्तके यस्य सः । ३. चिन्तयामास । ४. इयमहल्या अन्या योगिनीव दृश्यते ।

दानाद्यशो वर्धयन्ती निखिलेषु नृपेष्वियम् ॥
प्रख्यातकीर्तिरेकैव रेजे नृपसतीष्वपि ॥ २९ ॥

आयुर्हरति कालोऽयं जीवनं न परं यशः ॥
इतीव लोकैर्जगति यशःसम्पाद्यते सदा ॥ ३० ॥

द्यति पापं विदधतो ददाति परमं सुखम् ॥
इतीव दानं क्रियते श्रीमद्भिर्भूतले जनैः ॥ ३१ ॥

विनाशिभ्यो धनादिभ्यः साध्यते यच्चिरं यशः ॥
का नाम वनिता साध्वी साधयेन्न गृहागतम् ॥ ३२ ॥

कीर्तिर्विवर्धते दातुः शुक्लेन्दोरिव चन्द्रिका ॥
स्वरादिषु च लोकेषु यद्दाता पूज्यते जनैः ॥ ३३ ॥

ततो वदान्या मेदिन्यां दानं विदधते सदा ॥
स्वयं निरर्थका भूत्वा श्रीमन्तं कुर्वतेऽर्थिनम् ॥ ३४ ॥

ततो विप्रान् समाहूय सदाचारान् बुभुक्षितान् ॥
भोजयामास रुच्यान्नैः समक्षं सादरार्चितान् ॥ ३५ ॥

अन्नदानसमं लोके नान्यद्दानं प्रचक्षते ॥
इतीव सा ददौ नित्यं पक्वमन्नं सुधोपमम् ॥ ३६ ॥

ततः पर्णेषु शाकान्नं सूदैः सम्पाद्य यत्नतः ॥
परिवेषयते सा च सिषेवे मितमन्वहम् ॥ ३७ ॥

सात्विकं शाकपाकादि तुहिनाचलसंस्थिता ॥
बुभुजे योगिनीवासौ पिनाकिपदमेष्यती ॥ ३८ ॥

१. खण्डयति। २. धनदाना

यद्यप्यनिन्द्यं नैव स्यान्मद्यमांसादिभोजनम् ॥
तदन्वये परं साध्वी दूष्यं तच्चेत्यमन्यत ॥ ३९ ॥

सर्वदा शुद्धसङ्कल्पा विशुद्धाचरणा सती ॥
कथं तामसमांसादिदुष्टं सा भक्षयिष्यति ॥ ४० ॥

भुक्त्वा ततः स्तवै रम्यैरस्तौषीत्कृत्तिवाससम् ॥
सत्स्तवेन सदन्नेन स्वोन्तं सद्भवतादिति ॥ ४१ ॥

ततः प्रसादनकरे शान्ते शुचितमस्थले ॥
चित्तविश्रान्तये किञ्चिदहल्यास्वपदन्वहम् ॥ ४२ ॥

दानस्य फलसिध्यर्थं यथा स्वापः करस्थिताः ॥
दिवा स्वापो नु तस्याः स्याद्राष्ट्रकार्यस्य सिद्धये ॥ ४३ ॥

ततः कार्यानुगं चिह्नं कृत्वायाच्चासनालये ॥
आसीत्स्वयं यद्यपि स्त्री चित्तमस्त्रीव सा बभौ ॥ ४४ ॥

ततः सर्वाणि कार्याणि गतेऽप्यस्तं दिवाकरे ॥
विचार्य च व्यधान्नित्यं सा राजसदने गमम् ॥ ४५ ॥

द्वित्रिघण्टं ततः सायं पुनः शिवमपूजयत् ॥
मन्त्रं " नमः शिवायेति " स्वशिवाय जजाप सा ॥ ४६ ॥

नित्यमेवमनुष्ठाय श्रद्धयानलसा सती ॥
असौ रात्रौ फलमयमल्पाहारं चकार च ॥ ४७ ॥

१. गजचर्मधारिणं शङ्करम् । २. चित्तम् । ३. शेते स्म । ४. सु-आप: स्वापः-सुजलं निद्रा च । ५. वेषमित्यर्थः । ६. अधिकरणगृहे न्यायसभायाम् । ७. अश्ववान् राजा स इव । ८. गमनमित्यर्थः । ९ आत्मनः कल्याणाय ।

राष्ट्रकार्यं करे धृत्वा शान्तेन मनसा पुनः ॥
विचार्यानेकधा युक्तं शासनानि[1] लिलेख सा ॥ ४८ ॥

संशयमाला-पूर्वं मे श्वशुराज्ञासीत् "प्रजा रक्ष्या त्वयेति" च ॥
तत्कार्यमधुना कार्यं मयोपायैः सहस्रशः ॥ ४९ ॥

अथवा परमेशः स्वप्रजारक्षणकामुकः ॥
मां नियोजितवाँस्तत्र कार्यं संरक्षणं ततः ॥ ५० ॥

किंवा मत्तनयं हृत्वा प्रजाकार्ये न्ययोजयत् ॥
मां शम्भुस्तत्प्रजाः पालया नोचेन्मन्तुर्[2]भवेन्मम ॥ ५१ ॥

किं वा मे सकलं राष्ट्रं प्रेम्णा निपतितं गले ॥
अतस्तद्रक्षणं स्थाने मन्येऽहमबला यदि ॥ ५२ ॥

किंवा प्रजाः प्रजा मे स्युस्तासां माता मताह्यहं ॥
ततः सङ्गोपनं कार्यमेतत्स्यादीशसम्मतम् ॥ ५३ ॥

किंवा स्वदेशः कैलासस्तन्निष्ठा शाङ्कराः जनाः ॥
तत्सेवाकरणं युक्तमात्मकार्यममंस्त सा ॥ ५४ ॥

स्वदेशोऽयं स्वदेहश्च तस्याङ्गानि प्रजाः स्मृताः ॥
तद्रक्षणादात्मरक्षाममन्यत सदा सती ॥५५ ॥

अथ चैतच्चैतदात्म्यं तच्चिन्तनमभीक्ष्णशः ॥
विधातव्यं मयेतीशो मां न्ययुङ्क्त किमत्र सः ॥ ५६ ॥

यामादूर्ध्वमुभौ यामौ राष्ट्रकार्यं विशेषतः ॥
रहोन्वहं चिन्तयन्ती[3] कुर्वती च हितं[3] बभौ ॥ ५७ ॥

१. आज्ञापत्राणि । २. अपराधः । ३. राष्ट्रस्येति शेषः ।

मायेव च जगत्कार्ये कुर्वाणापि न मोहिनी ॥
अभूदहल्या सर्वेषां तारयित्री भवाम्बुधे ॥ ५८ ॥

रात्रौ नियतमेकान्ते सावधानेव योगिनी ॥
राष्ट्रकार्यमिव ध्यानं कुर्वती परमा बभौ ॥५९॥

निद्रां जयन्ती कुरुते मिताहारं दिवा निशि ॥
शोषयन्तीन्द्रियाण्येव योगिनी किं न सा भवेत् ॥६० ॥

नित्यानि कर्माणि च सावधाना कुर्वन्त्यसौ सत्यपि राष्ट्रकार्ये ॥
वरिष्ठराजस्य विना नुशिष्टिं कदापि नास्याः खलु कर्मबाधः ॥६१॥

कर्माणि नैमित्तिकसंज्ञकानि व्यधाद्यथा कालमसौ यथावत् ॥
राष्ट्रीयकार्यस्य विधौ प्रसक्तेर्नैमित्तिकानां न कदापि लोपः ॥६२॥

प्रायश्चित्तं ब्रह्मणि मालवदेशस्य मातुरप्यस्याः ॥
प्रायश्चित्तं कर्मणि न कदाप्यभवत्स्वयं सुतन्वन्याः ॥६३ ॥

उपवासपराणि यानि लोके कुरुते सा स्म सदा शुभव्रतानि ॥
बहुपुण्यकराणि यानि तस्या न बभूवुर्न च दृक्पथं गतानि ॥६४॥

शिवोपवासं कुर्वाणा वाङ्मनःकायशुद्धये ॥
शिवोपवासमिच्छन्ती चक्रे सा नियमान् बहून् ॥ ६५ ॥

इदानीं किं बहूक्तेन नियमा जगतीतले ॥
क्षेमङ्कराश्च वर्तन्ते तानसावकरोन्मुदा ॥ ६६ ॥

इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते श्रीमदहल्याचरिते दिनचर्यावर्णनं नाम त्रयोदशः सर्गः ॥

१. उपजातिवृत्तम् । २. अनुशासनं आज्ञामित्यर्थः । ३. गीतिवृत्तम् ।
४. औपच्छन्दसिकवृत्तम् । ५. अनुष्टुब्वृत्तम् ।

## चतुर्दशः सर्गः ।

शिष्य उवाच—

श्रीमद्गुरो मालिरावमातुश्चरितमद्भुतम् ॥
श्रुतं तेनाभवमहं समाहितमना भृशम् ॥१॥

असारमपि संसारं सारवन्तमिव स्वयम् ॥
प्रदर्शयन्ती सर्वेषां या सदाचरणाद्बभौ ॥२॥

अतस्तस्या वदान्याया दानधर्मादिवर्णनम् ॥
श्रोतुमिच्छामि भवतो यथावद्वक्तुमर्हसि ॥३॥

श्रीगुरुरुवाच—

प्रत्यहं किमपि वस्तु ददाना मल्लशत्रुसुतयोषिदहल्या ॥
किं वदामि जगतीह वदान्या नास्ति तादृगिति सर्वजनोक्तिः ॥४॥

दानमेवमकरोत्किल सा यद्वस्तुमात्रमवनीतलवर्ति ॥
येन बाढमखिलेषु जनेषु प्राप दातृषु महत्वमहल्या ॥ ५ ॥

तदेवाह—

महाकालरामेश्वरौ नागनाथो द्विजैरन्वहं पूजनीयाश्च भक्त्या ॥
तथा भीमशम्भू तदर्थं ददौ सा बहु द्रव्यमाचन्द्रसूर्यं च तेभ्यः ॥६॥

ओङ्कारेशे वैजनाथे च लिङ्गे भक्त्याऽकर्षीन्मन्दिरोज्जीवनं सा ॥
केदारेशे क्ष्मां च गोचारणार्थं द्रव्यं यष्टुं त्र्यम्बकेशं व्यतारीत् ॥७॥

काश्यां च विश्वेश्वरमन्दिरं सा तथैव घृष्णेश्वरलिङ्गतीर्थम् ॥
बध्वा तथा सोरटिसोमनाथं संस्थापयामास जनन्यहल्या ॥८॥

१. अनुष्टुब्वृत्तम् । २. स्वागतावृत्तम् । ३. द्वादशालङ्कावशेषः, भुजङ्गप्रयात वृत्तम् । ४. शालिनीवृत्तम् । ५. उपजातिवृत्तम् ।

सोमनाथे विशेषः—

स्वप्ने श्रीमदहल्यायाः सोमनाथोऽब्रवीत् स्वयम् ॥
यावने मन्दिरे क्षिप्तस्तैरहं चातिपीडितः ॥९॥

क्वचित्स्थापय मां भद्रे नित्यं पूजादिकं कुरु ॥
आकर्ण्य तत्ततः साध्वी स्थापयामास तं द्रुतम् ॥१०॥

क्लेशान् मनुष्यस्य विलोक्य शीघ्रं या दूयते चेतसि निर्भरं सा ॥
स्वदैवतं कालनिपीडितं तत्कथं हि विज्ञाय पुनः सहेत ॥११॥

मल्लिकार्जुनपूजायै प्रदीपज्वलनाय च ॥
सततं सा ददौ द्रव्यं परलोकहितैषिणी ॥१२॥

सर्वेष्वेवं वेतनादिप्रदानैर्गसीन्स्वीयां भक्तिमादर्शयन्ती ॥
गेहे लिङ्गार्चाविधौ सावधाना नित्यं सा स्त्री किं प्रसिद्धात्प्रमाद्येत् ॥१३॥

सप्तपुरीष्वयोध्याविषये—

साकेते श्रीरामभद्रस्य रम्यं प्रासादं सा कारयामास लोकैः ॥
शम्भोः पूजां प्रत्यहं या विधत्ते तत्प्रेयांसं विस्मरेद्वा कथं सा ॥१४॥

मथुराविषये—

संसारिणामिष्टपदोपलब्धिः कंसारिपादाब्जनिवासभूमिः ॥
संशोभते पूर्मथुराभिधाना देवैरनेकैरिव मण्डिता द्यौः ॥ १५ ॥

यस्याश्च जम्बूनिभनीलनीरा रम्यप्रवाहा यमुना वहन्ती ॥
जीवान् स्वलोकं नयतो निषेद्धुं दूतान् प्रवृत्तानिव दक्षिणस्याम् ॥१६॥

नीलोत्पलैर्नीलमणिप्रभैर्वा मनोरमप्रस्तरसञ्चयैर्वा ॥
विनिर्मिता यत्र विभान्ति घट्टा इन्दीवराभास्तरणा इवैते ॥ १७ ॥

१. अनुष्टुब्वृत्तम् । २. शालिनीवृत्तम् । ३. इन्द्रवज्रावृत्तम् । ४. उपजातिवृत्तम् ।

तत्र प्रयत्नाद्रचिताः प्रजाभिः क्रमेण सोपानपरंपराश्च ॥
स्वर्गन्तुकामा उपरि व्रजन्ति पापा अधः क्षालयितुं स्वपापम् ॥१८॥
[1]जनयात्रिकसौख्यकारकाभिर्महतीभिः कृतिभिश्च देव्यहल्या ॥
अधिरोपितवत्यसौ चिराय स्वयशोवृक्षमहो महान्तमेषा ॥ १९ ॥

माया—हरिद्वारविषये—

हरिद्वार[2]क्षेत्रे विमलजलगङ्गान्तिकतटे ॥
महायोगिव्रातैः स्वपदजलजैराञ्चिततटे ॥
सुघोषैः सङ्घुष्टे क्वचिदथ महायात्रिकजनै — ॥
रहल्या तत्रापि प्रथितबहुपूर्तान्यकुरुत ॥ २० ॥

प्रस्तरैर्बहुविधैरतिरम्यां घट्टनिर्मितिमथाप्यनुगङ्गम् ।
सा चकार विषयेषु विरक्ता तीर्थवासिजनसङ्घहितार्थम् ॥ २१ ॥

कृता[3]स्मिन् विशाला तया धर्मशाला वसन्त्यत्र नित्यं जना यात्रिकाश्च ॥
अनेकाशिषस्ते वितीर्यैव तस्यै समाधानवृत्तिं परां प्राप्नुवन्ति ॥ २२ ॥

अन्नसत्रमपि तत्र विद्यते भुक्तिमाप्य कतिचिद्दिनानि ते ॥
योगसाधनमहो प्रकुर्वते योगिलोकमपि भुञ्जतेऽञ्जसा ॥ २३ ॥

प्रस्तरैर्बहुविधैरतिरम्यां घट्टनिर्मितिमथाप्यनुगङ्गम् ॥
अञ्जसा स्वरपि पुण्यजनानां मार्गमेतमतनोज्जनमाता ॥२४॥

हरद्वा[5]रमेतद्धरस्थानमाप्तुं ध्रुवं द्वारमित्थं विनिश्चित्य माता ॥
निवस्तुं च भोक्तुं तथा स्नातुमेषा प्रजार्थं किलैतच्च सर्वं चकार ॥२५॥

काशीपुरीविषये—

न[3]गरी न गरीयसी जगत्यां खलु काशीसदृशी मनोहराख्या ॥
अकरोज्जननी जनस्य भक्त्या बहुसोपानयुतं महाप्रघट्टम् ॥२६॥

१. औपच्छन्दसिकं वृत्तम् । २. शिखरिणीवृत्तम् । ३. शालिनीवृत्तम् ।
४. रथोद्धतावृत्तम् । ५. भुजङ्गप्रयातवृत्तम् ।

तत्रापि सत्रं च महापवित्रं चकार राज्ञी शिवपाददासी ॥
यस्मिन् कुमारप्रमुखाः महान्तः संन्यासिनोऽश्नन्ति सदा सदन्नम् ॥ २७ ॥

दुष्टभूपपरिपीडिता मही सम्बभूव जनरक्षणे तदा ॥
सा प्रयत्नमकरोदनेकशः पालिकेति च यथार्थनामिका ॥ २८ ॥

हिंन्दुनामजनधर्मविरोधिम्लेंच्छसेवकगणा नृपतेश्च ॥
धार्मिकानपि जनान् विनिनिन्दुः शैवमन्दिरमथ प्रबभञ्जुः ॥ २९ ॥

संपीड्य लोकान् विविधैरुपायैर्भङ्क्त्वा च नानामरमन्दिराणि ॥
भूलोकमेनं कृतवान् स भूपो म्लेंच्छैर्भुजिष्यैर्यमलोककल्पम् ॥ ३० ॥

शास्त्रिणश्च कति वेदविदोऽपि पीडिताः सकलवस्तुविनाशैः ॥
मांसदानगृहभङ्गविदाहैर्म्लेंच्छभूपतिनिषेवकसङ्घैः ॥ ३१ ॥

श्रीविश्वेश्वरमन्दिरं सुरुचिरं भङ्क्त्वा क्षणान्मूलत- ।
स्तल्लिङ्गं च मनोहरं परमहो कूपेऽक्षिपन् सेवकाः ॥

क्रूरा एव विनाशकार्यकरणे राज्ञा नियुक्तास्तदा ॥
तत्स्वान्तेषु शिलोपमेषु करुणा नूनं कथं संस्पृशेत् ॥ ३२ ॥

तस्मिन् स्थाने यावनं मन्दिरं च निर्मायैव स्थापितश्च स्वधर्मः ॥
लोके शूरा दुर्बलान् बुद्धिहीनान् जित्वाधर्मेऽगन्मसान्संविधत्त ॥ ३३ ॥

बलवान् दुर्बलं हन्ति यथा जलचरोऽम्बुधौ ॥
स्वभाव एष दुष्टानां दृश्यते काशिकापुरि ॥ ३४ ॥

वेदवाक्यपरिचिन्तनाहतान् शान्तचेतस इमानपि क्षणात् ॥
स्वार्थवृत्तिकठिनान्तरिन्द्रियास्तान्विजित्य मुदमश्नुवन्ति ते ॥ ३५ ॥

काञ्चीपुरीविषये—

१. रथोद्धतावृत्तम् । २. स्वागतावृत्तम । ३. इन्द्रवज्रावृत्तम् । ४. शार्दूलविक्रीडित वृत्तम् । ५. स्वधर्मः सुअधर्मो वा । ६. अनुष्टुब्वृत्तम् । ७. उपजातिवृत्तम

कां[१]चीनगर्यां प्रतिमासमर्थं विद्वद्द्विजेभ्यः प्रददावहल्या ॥
देयं प्रदानं प्रतिघस्रमेतद्व्रतं किमस्या नृपदेवतायाः ॥३६॥

अवन्तीविषये—

क्षि[२]प्रातीरेऽवन्तिकायां विप्रेभ्यो वेतनं ददौ ॥
महाकालेशपूजार्थमहल्या प्रतिहायनम् ॥ ३७ ॥
बबन्ध मन्दिरं चारु पुरन्दरगृहं परम् ॥
श्रीशङ्करनिवासार्थमनन्त[३]रसुखेच्छया ॥ ३८ ॥

सेवाप[४]रा या च सदाशिवस्य देवालयं सा व्यदधात्तदर्थम् ॥
पूर्तादि कर्म क्रियमाणमस्याः पूर्तिं यथेच्छं कुरुतात्स शम्भुः ॥३९॥

पुरीविषये—

प्रा[१]चीस्थितजगन्नाथपूजार्थं वेतनं ददौ ॥
अन्नसत्रं तत्र चक्रे दरिद्रजनतुष्टये ॥ ४० ॥

द्वारकाविषये—

पू[२]जकाय प्रतिदिनं पूजनार्थं च वेतनम् ॥
ददौ द्वारवतीशस्य द्वारवत्यां पुरि स्वयम् ॥ ४१ ॥

बदरीव[५]नसंस्थितप्रसन्नप्रभुनारायणपादपद्मभृङ्गी ॥
नृपखण्डुजिनामकस्य भार्या व्यतनोत्सुन्दरमन्दिरं च विष्णोः ॥४२॥

रामेश्वरविषये—

माध[२]वोमाधवौ मान्यौ जगदीशावुभाविति ॥
मान्यमाना मालवेशमाता मान्यैश्च मानिता ॥ ४३ ॥

समु[४]द्रतीरे दिशि दक्षिण्यस्यां रामेश्वरस्यानुदिनं च शीर्षे ॥
गङ्गाजलं तत्परमादरेण समर्पयन्ती बहपण्यशीला ॥ ४४ ॥

१. उपजातिवृत्तम् । २. अनुष्टुब्वृत्तम् । ३. अवाधराहत यत्सुख मोक्षसुख तदर्थम् । ४. इन्द्रवज्रावृत्तम् । ५. औपच्छन्दसिकं वृत्तम् ।

गोदावरीतीरसंस्थे क्षेत्रे नाशिकनामनि ॥
देवालयं कृतवती दृढभक्तिमती सती ॥ ४५ ॥

पुण्यकूटकराणां च जनानामग्रदेशगा
चित्रकूटेऽप्यरचयत्सुन्दरं देवमन्दिरम् ॥४६॥

नाथद्वारेऽपि तत्रस्थद्वारकानाथशार्ङ्गिणः ॥
निवासस्थानमकरोद्भजन्ती शिवमप्यसौ ॥ ४७ ॥

पुष्करे जेजुरीपुर्यां हृषीकेशे सुरालयान् ॥
सुलतानपुरे तद्वदकरोन्मालवेश्वरी ॥ ४८ ॥

सप्तशृंग्यां निवसतिस्थानं चामरकण्टके ॥
धनभक्ती उभे तस्या भुवि किं किं न चक्रतुः ॥ ४९ ॥

क्षेत्रे परशुरामेऽपि श्रीकल्हाटकसंज्ञके ॥
कर्णाटकेऽथ पूजार्थं ददौ सा वेतनं धनम् ॥ ५० ॥

संसारसिन्धुतरणे कर्णधाराय शम्भवे ॥
यदर्पयद्धनं राज्ञी मन्ये तद्ध्रुव[1]साधनम् ॥ ५१ ॥

अहल्यायाः प्रार्थना –

स[2]ङ्कटानि सकलानि नाशय मज्जनस्य शरणागतस्य ते ॥
व्यङ्कटेश सुरकल्पपादप प्राप्तभक्तहृदभीष्टपूर्तये ॥ ५२ ॥

नैमिषारण्यके तीर्थं कुण्डं रावेरिपत्तने ॥
चकार सा पुण्यकर्त्री संहर्त्री राष्ट्रपाप्मनः ॥ ५३ ॥

प्रयागविषये—

शारदेन्दुकरसन्निभे शुभे गाङ्गवारिणि च यामुनं जलम् ॥
कज्जलप्रभमथात्र मिश्रितं तीर्थराज इति कथ्यते बुधैः ॥५४॥

१. यथा समुद्रतरणे ध्रुवतारका कर्णधारस्य साधनं भवति तथा अहल्यार्पितं धनं संसारतरणे साधनमभवदित्यर्थः। २. रथोद्धतावृत्तम्।

तस्मिन् प्रयागे विमलान्तरङ्गो रम्यः प्रघट्टो रचितस्तयैव ॥
सोपानमालापरिरम्भितश्च स्नातुं समुत्तीर्ण इवावभाति ॥ ५५ ॥

गयाक्षेत्रविषये—

फल्गुपुण्यमपि यत्र महत्स्यात्फल्गुनाम तटिनी प्रवहन्ती ॥
वर्ततेऽप्यवनता मुनिशापान्मानमत्र च जनश्रुतिरेव ॥ ५६ ॥

सर्वक्षेत्राग्रगण्यं जगति समभवद्यात्रिकाणां पितॄणाम् ॥
मुक्तिः पिण्डप्रदानाद्भवति शिवतमे विष्णुपादाम्बुजेऽस्मिन् ॥
लोके क्षेत्रं किलैकं सुखदमपि गयानामकं सुप्रसिद्धम् ॥
तस्मादस्मिन्नहल्या तिलकनकमहीधेनुदानानि चक्रे ॥ ५७ ॥

मन्दिरं परमसुन्दरं व्यधात् विस्तृतं विविधशिल्पशोभितम् ॥
यात्रिकाः समुपविश्य यत्र वै पिण्डदानमथ कुर्वते स्वयम् ॥५८॥

शिवपदरतया नतया विष्णुपदमहल्यया महाभक्त्या ॥
संसेवितं महद्भिः कुट्टिमरचनादिभिर्महच्चित्रम् ॥ ५९ ॥

श्रीमत्सङ्गमनेरनामनि महाक्षेत्रे प्रसिद्धे तथा ॥
श्रीमत्पण्ढरिपत्तने मतिमती खण्डोजिभार्या स्वयम् ॥
संसारार्णवतारकस्य च विभोः श्रीरामचन्द्रस्य सा ॥
रम्यं मन्दिरमातनोत्परमया भक्त्या तमास्थापयत् ॥ ६० ॥

प्रतिष्ठाने क्षेत्रे महति रमणीये क्षितितले ॥
भवाम्भोधेर्मुक्ताः कति परमभक्ताः समभवन् ॥
जनानां क्षुच्छान्त्यै परमकरुणापूर्णहृदया ॥
पवित्रान्नं सत्रं नियतमतनोत्तत्र च सती ॥ ६१ ॥

१. इन्द्रवज्रावृत्तम् । २. स्वागतावृत्तम् । ३. स्रग्धरावृत्तम् । ४. रथोद्धतावृत्तम् । ५. गीतिवृत्तम् । ६. शार्दूलविक्रीडितवृत्तम् । ७. शिखरिणीवृत्तम् ।

शिङ्गणापूरशिखरे श्रीशम्भुरवतिष्ठते ॥
तद्भक्तानां यात्रिकाणां तृषाशान्त्यै मनस्विनी ॥६२॥

चखान महतीं वापीं तिरस्कृतसुधारसां ॥
योऽन्नं प्रदित्सन्ती जलं तद्वत्सती ददौ ॥ ६३ ॥

। साहल्या महति तुळजापूरनगरे ॥
म्भोजश्रीचरणजगदम्बाविलसिते ॥
महावापीं खात्वा मधुरजलधारां सुमनसां ॥
जनानां तृट्छान्ति सहजमकरोद्दीनवशगा ॥ ६४ ॥

परळीनस्य दासस्य परळीनामपत्तने ॥
धर्मार्थमधनेभ्यस्सा धनदानं चकार ह ॥ ६५ ॥

पूजनं क्वचिदहो सुरस्य सा मन्दिरं क्वचिदपि प्रदीपनम् ॥
अन्नसत्रमपि कुत्रचित्सदा तत्र सद्द्विजवरार्थमाननोत् ॥ ६६ ॥

नाम्ना चिंचवडे महागणपतिस्थाने प्रसिद्धे पुरे ॥
यस्मिन्सत्पुरुषो महान् समभवन्मोरयाख्यः सुधीः ॥
तत्र श्रीगणनायकस्य विधिवत्पूजार्थमेषा ददौ ॥
द्रव्य वेतनमित्यहोऽत्र रसिकैः सन्दृश्यतां सर्वदा ॥ ६७ ॥

श्रीविठ्ठलविषये—

श्रीमद्विठ्ठलपादपद्मयुगुले भृङ्गायमाना सती ॥
मुक्ताभिः परमोज्वलाभिरभितो रत्नैर्मनोहारिभिः ॥
आत्मोत्थैः किरणैरहस्करकरस्पर्धाकरैर्मण्डितं ॥
रम्यं तं मुकुटं ददौ परमया भक्त्या प्रहृष्टान्तरा ॥ ६८ ॥

१. शिखरिणीवृत्तम् । २. अनुष्टुब्वृत्तम । ३. रथोद्धतावृत्तम
४. शार्दूलविक्रीडितवृत्तम् ।

महाधनिकपुञ्जवैरपि च कल्पनीयार्हणां
महामरकतोज्वलां विविधरत्नमुक्तान्विताम् ॥
महेश्वरसती ददौ रुचिरमस्तकाच्छादिकां ॥
सतोयघनरोचिषे नगरपण्ढरीवासिने ॥ ६९ ॥

कल्पितं कल्पकैर्यत्तत्प्रदत्ते कल्पपादपः ॥
अकल्पितमसौ लोकैर्दत्ते स्म महदद्भुतम् ॥ ७० ॥

सदा शिवं सा भजतां क्षेमङ्करपदाम्बुजे ॥
भक्तियुक्ता विठ्ठलेऽपि बभौ जनमता सती ॥ ७१ ॥

श्रीयुक्ते करवीरनामनि महाक्षेत्रेऽप्यहल्या सती ॥
लक्ष्मीस्थानमिदं पवित्रमतुलं विज्ञाय सानन्दहृद् ॥
धर्मार्थे विपुलं धनव्ययमहो कृत्वात्मनः कीर्तये ॥
नित्यं वेतनमप्यसौ परमया भक्त्या ददौ द्रव्यतः ॥ ७२ ॥

श्रीमद्गङ्गाजलेन प्रतिदिवसममी स्नापनीयाः सदैव ॥
श्रीमद्भूतेशविष्णुप्रमुखदिविषदश्चेति चित्ते निधाय ॥
तस्मिँस्तस्मिन् स्थले सा नियमितसमयं प्रापणीयं जलं मे ॥
तस्माल्लोकानहल्या दिशि दिशि चतुरान् कर्मशूरानताप्सीत् ॥ ७३ ॥

तेभ्यो धनं वा वसुधां समर्प्य निर्वर्तनीयं सुतनप्तृभिस्तैः ॥
आदिष्टलोका इव यन्त्रभागा निर्वर्तयन्तीव सदा तदुक्तम् ॥७४॥

लोकेऽनुज्ञां जनो राज्ञो जीवतश्चैव मन्यते ॥
अस्यां गतायामपि सा चलतीत्येतदद्भुतम् ॥७५॥

**इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते श्रीमदहल्याचारिते अन्नसत्रादिपूर्तकर्मवर्णनं नाम चतुर्दशसर्गः समाप्तः ।**

१. पृथ्वीवृत्तम् । २. टोपी इति महाराष्ट्र्याम् । ३. तोयेन जलेन सह इति सतोयः घनः—मेघः तद्वत् श्यामकान्तये । ४. अनुष्टुब्वृत्तम्, कल्पितं वाञ्छितम् । ५. शार्दूलविक्रीडितं वृत्तम् । ६. स्रग्धरावृत्तम् । ७. देवाः । ८. इन्द्रवंशावृत्तम् ।

## पञ्चदशः सर्गः

श्रीगुरुरुवाच—

मालवेशमहिलावनिपाला[1] दाननिर्जितविरोचनबाला ॥
यद्ददौ लघुपदात्रितयं स किन्त्वसावपि महान्ति पदानि[2]॥१॥

शुद्धं[3] गङ्गाजलं चञ्चच्चन्द्रिकाचयसन्निभम् ॥
श्रीरामपूजितं रामेश्वरं स्नापयति प्रभुम् ॥ २ ॥

कुन्तीसुतार्जुनवरप्रदं श्रीमल्लिकार्जुनम् ॥
शिवं संस्नापयन्ती सा शुचिभिर्गाङ्गवारिभिः ॥ ३ ॥

जनार्दनं वासुदेवं भक्तेच्छापूरकं वरम् ॥
आप्लावयत्प्रत्यहं तज्जलं सहजसुन्दरम् ॥ ४ ॥

स्थितं हिमाद्रेः परतः श्रीमत्पशुपतेश्वरम् ॥
सम्यगाप्लावयत्येतद्गाङ्गं वारि मनोहरम् ॥ ५ ॥

श्रीमन्तं वरदं देवं पद्मनाभं जनार्दनम् ॥
प्रत्यहं स्नापयत्येव गाङ्गं वारि सुनिर्मलम् ॥ ६ ॥

अनन्तशयनो देवः श्रीमान् लक्ष्मीपतिः स्वयम् ॥
ईष्टे गाङ्गं जलं पातुं तामिच्छां पूरयत्यसौ ॥ ७ ॥

महाबलेश्वरः शम्भुः क्षेत्रे गोकर्णके वसन् ॥
अहल्यार्पितगाङ्गेन स्नाति च प्रतिवत्सरम् ॥ ८ ॥

१. स्वागतावृत्तम्। २. पदानि चरणाः वस्तूनि च ( पदं व्यवसितत्राणस्थान-लक्ष्मांघ्रिवस्तुषु इति विश्वः )। ३. अनुष्टुब्वृत्तम।

सुब्रह्मण्येश्वरो देवः स्नातुं गाङ्गाय[1] सर्वदा ॥
स्पृहयत्येव तत्पूर्तिं कुरुते कल्पवृक्षवत् ॥ ९ ॥

तारकः सर्वभूतानां द्वारकानाथमाधवः ॥
गाङ्गादन्येन केनापि सिष्णासति[2] न सर्वदा ॥ १० ॥

डाकोरनाथोऽपि तथा सर्वथानाथपालकः ॥
गाङ्गस्य वारिणः स्नानपानाभ्यां खलु तृप्यति ॥ ११ ॥

गिरिजेशो महादेव उत्कण्ठेश्वरनामकः ॥
गाङ्गेऽम्भासि सदा स्नातुमीहां चक्रे गजेन्द्रवत् ॥ १२ ॥

अवन्ध्याख्यो जगन्नाथो भक्तकामप्रपूरकः ॥
भो गाङ्ग तव दानेन तुष्यतीह जनार्दनः ॥ १३ ॥

एवं सर्वामरान् राज्ञी गाङ्गवार्यर्पणेन सा ॥
सर्वेषां शिवमिच्छन्ती भक्तश्रेष्ठा बभौ भुवि ॥ १४ ॥

परलीनं वैजनाथं परलीनाश्च भेजिरे
सा तं गङ्गाम्भसा स्नातं दासी किं न करिष्यति ॥ १५ ॥

श्रीत्र्यम्बकेश्वरं शम्भुं संस्नापयितुमञ्जसा ॥
गाङ्गं शिरसि संलग्नं तत्किं गङ्गाधरोऽभवत् ॥ १६ ॥

गोदावरीतीरवर्तिपञ्चवट्यां सदा स्थितम् ॥
आप्लावयति गङ्गाम्भो राममागत्य मूलतः ॥ १७ ॥

सिद्धेश्वरं मातृगयास्थानेऽवस्थितमादरात् ॥
गङ्गाम्भः पूर्णचन्द्राभं स्नानार्थमधिगच्छति ॥ १८ ॥

१. गङ्गाजलाय । २. स्नातुं इच्छति ।

श्रीभिमाशङ्करं देवं भीमसंसारवारकम् ॥
गाङ्गीभिरद्भिस्तं तृप्तं कुर्वतीव सती बभौ ॥ १९ ॥

तुलसीमञ्जरीलिप्सुपण्ढरीपुरवासिने ॥
अर्पयित्री गाङ्गजलं भावयित्री सती हृदि ॥ २० ॥

लिङ्गदेहं शमयितुमेकलिङ्गं सदाशिवम् ॥
भजन्त्यहल्या गङ्गाम्भस्तस्मै भक्त्या समर्पयत् ॥ २१ ॥

मुनये कपिलायेषा गाङ्गं प्रीत्यार्पयत्तथा ॥
यस्य प्रसादात्प्राप्ता सा स्थाने तस्मै तदर्पणम् ॥ २२ ॥

संसारसन्तापनिवारकं तं केदारमन्दारतरुं प्रसन्नम् ॥
शुद्धेन गाङ्गेन जलेन राज्ञी संसेचयित्री प्रबभौ प्रमोदात् ॥ २३ ॥

सौम्यस्वभावं शुचिसोमभालं श्रीशङ्करं सोरटिसोमनाथम् ॥
भक्त्या भजन्ती सततं च तस्मै गाङ्गं जलं सा प्रददौ शिवाय ॥२४॥

अनाथरक्षणे दक्षं नाथद्वारस्थितं प्रभुम् ॥
स्नपयन्ती शुभैर्गाङ्गैः शिवाय जगतोऽभवत् ॥ २५ ॥

श्रीवृद्धलाटेश्वरदेवनं च घृष्णेश्वरं स्नापयितुं लषन्ती ॥
गाङ्गं जलं दत्तवती तदर्थं सेवापराभूदपि येन केन ॥ २६ ॥

प्रपूरयन्तं निजभक्ततृष्णां वेरूळपुर्याः सविधे वसन्तम् ॥
शमीहमानेव निजप्रजानां घृष्णेश्वरं सा शरणीचकार ॥ २७ ॥

नक्तं दिवं लोकहिताय राष्ट्रे यत्नाननेकान् जननी व्यधत्त ॥
तां प्रेषितां कारुणिकेश्वरेण लोका भवानीमिव मन्वते स्म ॥२८॥

१. इन्द्रवज्रावृत्तम् । २. उज्वलचन्द्रचूडं । ३. इच्छन्ती । ४. उपजातिवृत्तम् ।५. शं–कल्याणं–ईहमाना–इच्छन्ती इवेत्युत्प्रेक्षा । ६. इन्द्रवंशावृत्तम् ।

नो चेत्—देवाश्च तीर्थानि महान्ति च क्व क्व राजमाता निवसत्यहल्या ॥
परन्तु तद्रक्षणकामना सा द्रव्यं शरीरं व्ययितं चकार ॥ २९ ॥

मल्लारिनामकं देवं जेजुरीग्रामवासिनम् ॥
शुद्धैर्गङ्गाजलैः स्नानात्तृप्तमातन्वती बभौ ॥ ३० ॥

उज्जयिन्यां स्थितं श्रीमन्महाकालेश्वरं प्रभुम् ॥
समर्प्य गाङ्गमुदकमतोषयदसौ सती ॥ ३१ ॥

शुद्धं गाङ्गं मनोहारि वारि देवाय नित्यदा ॥
नियमेनार्पयन्तीं तां देवीं मन्येऽम्बिकां पराम् ॥ ३२ ॥

क्वचिच्छत्रं क्वचिद्दानं देवकार्यार्थमन्दिरम् ॥
क्वचिन्मूर्तिप्रतिष्ठा च क्वचिद्गोरक्षणाय भूः ॥ ३३ ॥

क्वचित्तस्या धर्मशाला क्वचिन्निर्जरमन्दिरम् ॥
क्वचिच्चाखण्डदीपः स्यात्क्वचिदुत्सववेतनम् ॥ ३४ ॥

क्वचिद्रोगविनाशाय दरिद्राणां तथौषधम् ॥
क्वचित्तृषार्ततृप्त्यर्थं प्रपाकासारनिर्मितिः ॥ ३५ ॥

क्वचिन्नदीषु विप्राणां स्नानसन्ध्यादिकं विधिम् ॥
विधातुं शान्तमनसा शिलाभिर्घट्टबन्धनम् ॥ ३६ ॥

क्वचित्तीर्थेषु यवनैर्दूषितेषु तथा क्वचित् ॥
भग्नेषु पुनरुद्धारः क्वचित्पूजार्थवेतनम् ॥ ३७ ॥

ईमानि पुण्यानि शतानि भूमौ गुप्तानि दानान्यपि कानि सन्ति ॥
वाचां पराणीव ममाल्पबुद्धेश्चकार सा मालवदेशमाता ॥ ३८ ॥

नैतादृशं स्थलमहो जगति प्रसिद्धं दानादि यत्र न चकार किमप्यहल्या ॥
तस्मात्कलौ कृपणलुब्धजनप्रपूर्णे मुख्यैव दातृषु जनेषु बभूव राज्ञी ॥३९॥

१. अनुष्टुब्वृत्तम्। २. पाणपांई। ३. उपजातिवृत्तम्। ४. वसन्ततिलकावृत्तम्।

कति शास्त्रपुराणवाचका वा हरिदासाः कति वा कुशीलवा वा ॥
वेनेयेन तया धनादिदानैः कतिवारं कति तर्पिताश्च लोके ॥ ४० ॥

श्रीमद्व्यासकृते सतां सुचरितैर्युक्ते सतां संमते ॥
निर्वाणैकपरैः शुकप्रभृतिभिर्भक्तैः समालम्बिते ॥
श्रीमद्भागवते महामहिमभिर्विद्वद्भिराशंसिते ॥
ग्रंथे भक्तिरमेन सादरमना आसीदहल्या सती ॥ ४१ ॥

सप्ताहमध्ये श्रवणं कदाचित्तस्यैव पारायणमाशृणोत्सा ॥
तस्यास्तु तद्भक्तिरसावगाहो व्यस्मारयत्सर्वमिहान्यकार्यम् ॥ ४२ ॥

पुस्तकान्यपि च भागवतानां या ददौ कनकसिंहयुतानि ।
ब्राह्मणेभ्य उपकल्पितपूजा भक्तिभावविनमनाः समुदारा ॥ ४३ ॥

क्षौमाणि वस्त्राणि सती स्म दत्ते महान्त्यमूल्यानि सदक्षिणानि ॥
पौराणिकेभ्योऽपि विचक्षणेभ्यः सीदत्कुटुम्बेभ्य ऋतद्विजेभ्यः ॥४४॥

प्रतिवर्षं नभोमासि भाव्यमाने महोत्सवे ॥
भोजयामास सा देवी विप्रान् पञ्चसहस्रकम् ॥ ४५ ॥

गोपगोकुलनाथस्य साधुगोवर्धनोत्सवे ॥
ब्राह्मणान् भोजयन्त्यासीत्प्रतिसंवत्सरं मुदा ॥ ४६ ॥

माघवद्यप्रतिपदि ध्वजोत्सवमकारयत् ॥
ओङ्कारेश्वरसान्निध्ये व्यधात्सान्नप्रदानकम् ॥ ४७ ॥

ग्रामे सङ्गमनेरनामनि सुखी कश्चिन्महाब्राह्मणः ॥
श्रीमद्रामपुरोगमं स्वयमहो संस्थापयन् पञ्चकम् ॥

१. औपच्छन्दसिकं वृत्तम्। २. नटाः। ३. शार्दूलविक्रीडितं वृत्तम्। ४. इन्द्रवंशावृत्तम्। ५. ऋताः सत्याः—आचारसम्पन्नाः द्विजाः ब्राह्मणाः, तेभ्यः नतु ब्राह्मणब्रुवेभ्यः इत्यर्थः। ६. अनुष्टुब्वृत्तम्।

विप्रेच्छामनुसृत्य पूजनकृते संकीर्तनार्थं तथा
तस्मै वेतनमर्पयद्बहुतरं देवी सती भक्तितः ॥ ४८ ॥

काश्यां श्रीमणिकर्णिकाह्वयमहातीर्थे प्रघट्टो महान् ॥
रम्यः स्थूलशिलाभिरादृतवपुर्बद्धस्तयाहल्यया ॥
यस्मिन् शान्तहृदः स्वकर्म सकलं कुर्वन्ति विद्वज्जना
भस्मालङ्कृतबाहुभालहृदयाः साक्षादमी शङ्कराः ॥ ४९ ॥

दशाश्वमेधेऽपि महाप्रघट्टं स्नातुं द्विजेभ्यो विरचय्य देवी ॥
संपादयामास यशश्च पुण्यं लोके तदर्थं महतां हि कृत्यम् ॥५०॥

परश्वधायुधः शौर्ये लोके विख्यातिमासवान् ॥
दानधर्मेषु जगतस्तथाहल्या मता तदा ॥ ५१ ॥

महेश्वरविषये —

महेश्वरस्थानमतीव रम्यं रेवानदीतीरविराजमानम् ॥
तपो विधित्सोः सुफलप्रदायि प्रसिद्धमेतज्जगतीतलेऽस्मिन् ॥ ५२ ॥

सोमोद्भवा सोमकराभनीरा वन्यैः समीरैः प्रचलत्तरङ्गा ॥
तीरस्थितानेकतरुष्वसंख्यैर्द्विजैस्तपस्विप्रवरैरिवासीत् ॥ ५३ ॥

यस्याः स्वादुतरं तरङ्गतरलं शुद्धं तपोराशिभिः ॥
श्रान्तैः पेयमवश्यमन्तिमफलं दातुं किमत्रागतम् ॥
पानात्तीरनिवासिवारितरुजं चन्द्रांशुगौरप्रभं ॥
रुच्या चामृतकल्पया किमु जलं गाङ्गं प्रतिस्पर्धते ॥ ५४ ॥

रेवामहानदीसेवां कुरुते यः सदा नरः ॥
कृतार्थं कुर्वते तं तु देवास्तत्तीरवासिनः ॥ ५५ ॥

१. उपजातिवृत्तम्। २. अनुष्टुब्वृत्तम्। ३. चन्द्रकिरणसमजला। ४. शार्दूलविक्रीडितं वृत्तम्।

न हि[1] रम्यतरं तथा जलं न हि रम्यं जगतीतले वनम् ।
न हि रम्यतरं तथा तटं मनआकर्षकरं परं स्मृतम् ॥५६॥

अम्बरस्पर्शिशिखरे तत्तीरे मन्दिरे उभे ॥
अहल्यया विरचिते भुक्तिमुक्ती इव स्थिते ॥ ५७ ॥

अतीव[3] किल सुन्दरं परशुरामसन्मन्दिरं ।
तथा गिरिशमन्दिरं विलसतो हि यत्पार्श्वयोः ॥
तदन्तरमहाशिलाविरचितः प्रघट्टो महान् ।
शिवस्य कर एव तां किमु समाह्वयन् दृश्यते ॥ ५८ ॥

मन्ये स्वर्लोकमारोढुं रम्याः सोपानपङ्क्तयः ॥
देव्या तया विरचिता योगिनो भूमिका इव ॥ ५९ ॥

अथवा शिवतत्त्वस्य निर्व्यलीकमुपासकाः ॥
याभिः प्रयान्ति कैलासं ताश्चोपास्तिपरम्पराः ॥ ६० ॥

आत्मानं द्रष्टुकामानां जनानां श्रान्तचेतसाम् ॥
तया विनिर्मिता नूनं क्षणं विश्रान्तिभूमयः ॥ ६१ ॥

महेशं द्रष्टुकामानां जनानां महतामपि ॥
स्थले स्थले स्थितास्तत्र ध्रुवं ता मार्गदर्शिकाः ॥ ६२ ॥

ततो महेश्वरपुरवर्णनम् ----

सुरेश्वरपुरोपमं खलु महेश्वराख्यं पुरं ॥
कुविन्दकृतसुन्दराकृतिपटैः समुद्भासितम् ॥
महाशयजनैस्तथा गुरुकवीन्द्रकल्पैर्गृहैः
महद्भिरमरालयैश्च पथिभिः समुज्जृम्भते ॥ ६३ ॥

१. वियोगिनीवृत्तम् । २. अनुष्टुब्वृत्तम् । ३. पृथ्वीवृत्तम् ।

पण्यवस्तुभिराकीर्णा विपण्यो बहुलास्तथा ॥
वर्तन्ते यत्र वर्णाश्च चत्वारो धर्मशालिनः ॥ ६४ ॥

वीथ्यां वीथ्यां वैदिकानां च सङ्घः सङ्घे सङ्घे वेदशास्त्रादिघोषः ॥
घोषे घोषे यत्र शिष्यस्य पाठः पाठे पाठे श्रोतृचित्ते समाधिः ॥६५॥

वीथ्यां वीथ्यां वर्तते लेखशाला तस्यां तस्यां विद्यते छात्रसङ्घः ॥
सङ्घे सङ्घे दृश्यते सूक्ष्मबुद्धिर्बुद्धौ बुद्धौ सत्कलानां प्रवेशः ॥ ६६ ॥

अन्नसत्रमपि तत्र जनानां क्षुद्विनाशकरणे महदासीत् ॥
येन तत्र न च कोऽपि बुभुक्षुर्वर्तते क्वचिदपि स्म कदापि ॥ ६७ ॥

नालभन्त परं यत्र नादयः पञ्च पत्तने ॥
निर्घृणो निर्धनो नीचो निन्दको निकृतस्तथा ॥ ६८ ॥

बन्दिनो यत्र वर्तन्ते सौधे कारागृहे न च ॥
गुणा गुणिषु विद्यन्ते न कदा पशुबन्धने ॥ ६९ ॥

कराः प्राणिषु वर्तन्ते न क्वचित्पण्यवस्तुषु ॥
कलङ्काः पण्यगेहेषु जनेषु न कदापि च ॥ ७० ॥

खड्गः कोशे च विपिने यत्र नैव रिपौ क्वचित् ॥
बन्धः काव्यविशेषेषु नान्येष्वपि कथञ्चन ॥ ७१ ॥

मदः कुञ्जरगण्डेषु यत्र नान्यत्र कुत्रचित् ॥
कामः सर्वस्य तृप्तत्वाच्छब्दः कोशेषु दृश्यते ॥ ७२ ॥

जनाः कुण्डलिनो यत्र न परं परदंशकाः ॥
कण्टका जनहस्तेषु न परं राजसङ्ग्रहे ॥ ७३ ॥

१. शालिनीवृत्तम्। २. अनुष्टुब्वृत्तम्। ३. नकारः आदिः अद्याक्षरं येषु ते नादयः। ४. पीडितः। ५. बन्दिनः स्तुतिपाठकाः सौधे राजप्रासादे वर्तन्ते कारागृहे न च बन्दिनः नाम बन्धनयुक्ताः अपराधिनः जनाः। ६. रज्जवः पक्षे सद्गुणाः। ७. हस्ताः पक्षे राजग्राह्यधनानि। ८. पशुविशेषः गेंडा इति महाराष्ट्र्यां प्रसिद्धः, असिर्वा ९. रचनाविशेषः बन्धनं वा। १०. कुण्डलधारिणः पक्षे नागाः।

गदा मुकुन्दहस्ते च न कदा जनमण्डले ॥
रजः स्त्रीष्वेव मास्येव न क्वचित्पथि यत्र च ॥७४ ॥

तत्र शङ्करमन्दिरविषये —

कैलासमाप्तुं सुदृढप्रयत्नेनेतुं नदीस्नातमलं च भक्तम् ॥
संस्थापयामास गिरीशमेषा परोपकारार्थकजीविता यत् ॥७५॥

स्वदर्शनात्पूर्वमयं प्रदृश्यतां भवेत्ततस्तत्करणं यथेप्सितम् ॥
इतीव सर्वं हृदये निधाय किं जनस्य कल्याणकरी चकार तत् ॥७६॥

परशुरामन्दिरविषये—

कश्चिच्च वैकुण्ठमथारुरुक्षुः प्राप्तस्तपस्वी विजितेन्द्रियः स्यात् ॥
तदर्थमेषा परशुग्रहं तं किं स्थापयन्ती जनकार्यकर्त्री ॥७७॥

स्त्रीपुत्रपश्वादिलतान्वितं तं कामादिपर्णैः प्रतिभासमानम् ॥
सद्वासनामूलभवाख्यवृक्षं छेत्तुं शरण्यः परशोर्गृहीता ॥ ७८ ॥

महेश्वरांघ्री सततं भजन्ती महेश्वरस्थानमधिश्रयन्ती ॥
एकैव सासीत्परमार्थनिष्ठा मन्ये तदन्ये परमार्थनिष्ठाः ॥ ७९ ॥

वर्णयामि तव किं वद शिष्य वर्णनं मम भवेल्लघु तत्र ॥
दानमेव विपुलत्वमुपेयाद्द्रव्यवान् हि धनदः क्व दरिद्रः ॥८०॥

सूर्योपरागे महतीव पर्वणि शतं सहस्राणि च रूप्यकानि ॥
सङ्कल्पितानि स्वयमेव दातुं गजोऽपि दत्तश्च तया किलैकः ॥८१॥

पञ्चत्रिंशत्तुलादानमकार्षीच्च हिरण्मयीम् ॥
एकां सह तथा नप्त्रा ददौ नृपसहस्रकम् ॥ ८२ ॥

१. उपजातिवृत्तम् । २. इन्द्रवज्रावृत्तम् । ३. स्वागतावृत्तम् । ४. नृप— इति षोडशसङ्ख्यावाचकः शब्दो ज्योतिषशास्त्रे ।

सप्तमे मासि गौः सूता सा च[1] वत्समभक्षयत् ॥
दुश्चिन्हमिति सा माता लक्षविप्रानभोजयत् ॥ ८३ ॥

विप्रेभ्योऽदाद्दक्षिणां सा सहस्रं पञ्चविंशतिम् ॥
पुराणोक्तान् दानशूरान् यस्या दानमलज्जयत् ॥ ८४ ॥

भूमौ दानेन विदुषः श्रीमतः कुरुते स्म या ॥
परलोके वदान्यानां मध्ये मणिरिवाबभौ ॥ ८५ ॥

सर्वेषां प्राणिनां सर्वान् पूरयन्ती मनोरथान् ॥
दृष्ट्वाहल्यां कामधेनुः किमु स्वर्गे पलायिता ॥ ८६ ॥

याचकानामीहितानां पूरयित्री यदाभवत् ॥
अहल्या पारिजातः किं ततः स्थावरतां गतः ॥ ८७ ॥

यां दृष्ट्वा धनदः कोऽत्र पृष्टे सर्वैर्धनैश्वरे ॥
निरुत्तरः स भूत्वा किमुत्तरां दिशमासन्नान् ॥ ८८ ॥

रसानादाय च करैर्दत्ते भास्वान् स्वयं जलम् ॥
अगृहीत्वा पुनरसौ किं तस्माच्छ्रेयसी न सा ॥ ८९ ॥

सत्सु कोशेषु कविभिर्वरुणोऽप्रद उच्यते ॥
लज्जया सर्वदां दृष्ट्वा तां च प्रत्यङ्मुखोऽभवत् ९०

तिष्ठति स्वर्गभोगार्थं परं तत्र स गोत्रभिद् ॥
अदात्स्वगोत्रविख्यात्यै ततः सा श्रेयसी न किम् ॥ ९१ ॥

यशसा धवलां शुद्धां भान्तीं राज्ञीं विलोकयन् ॥
गुप्तः कुण्डेषु चुल्लीषु यत्स्वयं कृष्णवर्त्मकः ॥ ९२ ॥

कुर्वन्तीं धर्मदानादि स्वपदासक्तचेतसम् ॥
दृष्ट्वेशान इमां शुद्धां दर्शयन् तां दिशं श्रितः ॥ ९३ ॥

१. चकारात् वार इति महाराष्ट्र्यां दद् द्रव्यं संज्ञितं तदपि ।

स्वमपेक्ष्य प्रधावन्त्या तत्कीर्त्या ह्रीण आशुगः ॥
स्वास्थितिं स्वस्थिरां नैव लभतेऽद्यापि कुत्रचित् ॥ ९४ ॥

विधायानन्तकं पुण्यं धर्मराजत्वमाश्रिताम् ॥
दृष्ट्वैनां दूनहृदयोऽवाक्स्थितोऽन्तकरोऽपि सः ॥ ९५ ॥

राज्ञ्याः कीर्तिश्च सर्वत्र याति चेद्यातु सर्वदा ॥
इति निन्दन् यातुधानो निन्द्यां दिशमवाप्तवान् ॥९६ ॥

सदा स्वस्वं वितीर्यासौ निःस्वं स्वं वा परं जनम् ॥
स्ववन्तं शुद्धहृदया चक्रे स्वपुरवासिनम् ॥९७ ॥

योऽहल्यादानगणनं सङ्ख्यया कर्तुमुद्यतः ॥
उष्ट्रास्यस्पर्शकारीव स नरो वाच्यतामियात् ॥ ९८ ।

कश्चिद्यतेत सङ्ख्यावान् तस्या वा दानमापनम् ॥
अतिमानं विलोक्यैव स च विश्रान्तिमाप्नुयात् ॥ ९९ ॥

दानोदधिमहल्याया विलोक्य चतुरब्धयः ॥
स्पर्धया क्षोभमापन्ना नाद्यापीव विशश्रमुः ॥ १०० ॥

इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते
श्रीमदहल्याचरिते धर्मकार्यवर्णनं नाम पञ्चदशः सर्गः।

# षोडशः सर्गः



शिष्य उवाच—

अथ श्रीमद्गुरो मह्यं श्रवणोत्कण्ठिताय च ॥
धर्मवत्या अहल्यायाः कन्यायाश्चरितं वद ॥ १ ॥

गुरुरुवाच —

ददौ स्वकन्यां यशवन्तनाम्ने शूराय फणशेकुलसम्भवाय ॥
मुक्ताभिधां सा जनशर्मदात्रीं गोत्रद्वयाशेषरुजापहर्त्रीम् ॥ २ ॥

अभिहितं भवते हि तृतीयके क्वचिदये पुरतः कथयामि ते ॥
नृपसुताचरिते रुचिरे बत दृढमते रमते यदि ते मनः ॥ ३ ॥

निजपतिं यशवन्तमथो सदा नलमिव प्रभुभीमककन्यका ॥
गिरिधरं कमलेव च सर्वदा दृढबलं त्वबला तमसेवत ॥ ४ ॥

जगति विष्णुपदे शशिना यथा स्वरमणेन बभौ किल रोहिणी ॥
स्वजननीसदने तनया तथा सुमतिना निजनाथवरेण सा ॥ ५ ॥

प्रमुदिते स्वधवे मुदिता च सा सुशयिते शयितावहिता तथा ॥
क्वचिदथ क्षुधिते क्षुधिता सुता प्रतिकृतिः स्वकृतानुगुणा यथा ॥६॥

स च पतिः कतिचिद्दिवसानथ प्रमुदितो रमते स्म तया स्त्रिया ॥
किसलयैः कुसुमैश्च मनोरमे मधुवने रमयेव रमाधवः ॥ ७ ॥

अथ तयोर्विषये रतयोर्द्वयोः समभवत्तनयो विधियोगतः ॥
हिमगिराविव वै रममाणयोर्मुदितयोः शिवयोः शिखिवाहनः ॥८॥

१. अनुष्टुब्वृत्तम्। २. उपजातिवृत्तम्। ३. द्रुतविलम्बितं वृत्तम्। ४. मयूरवाहनः अग्निः।

करगृहीतविभूषणवस्त्रकैरथ जनैर्बहुभिः परिवारिता ॥
स्वतनयं रुचिरं च नथ्याह्वयं समकरोज्जननी सुमुवासिनी ॥९॥

प्रतिदिनं तनयस्य मुखेन्दुना विकसिते उभयोर्मुखकैरवे ॥
अभवतां जननीजनिकारिणोः सुतमुखं न कयोर्वद शर्मदम् ॥१० ॥

स च शिशुर्जननीजनपोषितो निजकलाभिरथेन्दुरिवाम्बरे ॥
लघुतरुर्ववृधे च यथा जलैरुपवने पवनेन विकम्पिते ॥ ११ ॥

कतिपयैर्दिवसैरथ बालकः स्वजननीजननीकथिताक्षरम् ॥
प्रथमतः सकुतूहलदर्शनं प्रणिजगाद ततः स शनैः शनैः ॥ १२ ॥

अथ मनांसि समस्तशरीरिणां निजगुणैः सहसा स चकर्ष ह ॥
यदितरैरवशं बहुसाधनैरपि वशीकुरुते सकलं गुणः ॥ १३ ॥

स्वजननीजननीसहजात्मजाजनिभुवं रुचिरां किल कन्यकाम् ॥
परिणिनाय तृतीयदिने शुभे सुरुचिरे सुरभावपि माधवे ॥ १४ ॥

विषयसेवनतो विविधैर्जनैर्बलवतः किमु दुर्विधियोगतः ॥
क्षयमवाप स मुक्तिसुतः परं बहुलपक्षगतेन्दुरिवान्वहम् ॥ १५ ॥

भुवि समस्तजनान्तकरोऽन्तकस्तमथ पाशवशं कृतवान् स्वयम् ॥
सकलजीवसुखाश्रयमेककं समनयन्निजलोकमतीन्द्रियम् ॥ १६ ॥

तदनुमातृमुखा अखिला जनाः प्ररुरुदुः स्वकराहतशीर्षकाः ॥
क्षणमवोचुरहो "निहता वयं" क्षणमवापुरमी प्रविमूर्च्छनाम् ॥१७॥

उभयवंशविवर्धनकारणं परमसौ तनयो विधियोगतः ॥
क्षयमवाप परं परमेश नः सकलहानिरभूदधुनाक्षया ॥ १८ ॥

तनयहीनमहो मम जीवनं यदफलौषधिजीवनवद् वृथा ॥
किमिति मां न निहंसि विधेऽधुना ध्रुवमहोऽद्य मृतिं सुखदां वृणे ॥१९॥

१. नथ्याबा इति नाम। २. क्षयरोगम्।

अथ सुतां जननी निजगाद सा किमिति दुःखमये कुरुषे चिरम् ॥
जनदृशा यदनीतिकरं परं विधिकृतं सकलं विहितं खलु ॥ २० ॥

तदबले भृशदुःखितमानसे वसनभूषणभूषितविग्रहे ॥
प्रतिपदाम्बुरुहार्पितशीर्षके दिवमतीत्य सतीगतिमापतुः ॥ २१ ॥

पितृवने स्वपदा रुदती सती गतवती जननी कथमप्यसौ ॥
रसघटीं रजनीं समतीत्य वै निववृतेऽविवृतेन्द्रियवृत्तिका ॥ २२ ॥

निभृतदूनतया स्तिमितेन्द्रिया स्वपिति नो न मनागपि जक्षिति ॥
निकटवासकरैः सततं जनैः सुचतुरैरपि बुद्धमनोरथा ॥ २३ ॥

अमितदुखपरम्परयान्वितं भवमिमं बहुशोऽनुभवन्त्यसौ ॥
भवपदं विपदं सकलां हरेदिति तदेव निरन्तरमाभजत् ॥ २४ ॥

तदनु सा दिवसैः कतिभिः सती निजसुतापतिमृत्युमथाशृणोत् ॥
अमितदुःखितयात्मजयाम्बुधावखिलदुःखमये पुनरापतत् ॥ २५ ॥

कविराह—

अननुकूलविधिर्यदि वर्तते शिरसि तस्य च सङ्कटमालिका ॥
न च कदा तमहो प्रविमोचयेत्प्रतिविधानशतैरपि तत्कृतैः ॥ २६ ॥

अयि समस्तजनान्निरपत्रपं यमगृहेषु नयन् जगतीतले ॥
सकलतद्धितलोकमहारवं न च शृणोषि न वेत्सि विधे कथम् ॥२७॥

वद विधेयममीभिरुपस्थितैः किमु विधे सविधे तव दुःस्थितैः ॥
न गणयन् जनदुःखमहो मनाग्विहितवान् भगवान् यदभीप्सितम् ॥२८॥

भवति ते जगतीव च कूर्दनं परमहो खलु तज्जनपीडनम् ।
जनविघातकखेलनमीश्वरे महति तद्बहु निन्द्यमितीर्यते ॥ २९ ॥

१. नध्यावास्त्रियौ। २. भक्षयांते। ३. शिव।

अहल्योवाच —

मम कुलं च सुताकुलमद्य ते प्रणिहतं सहजं कुशलं[1] प्रणीः ॥
परमतोषकरं परमेश्वरात्किमपि वस्तु भवान्भुवमीहताम् ॥ ३० ॥

ततः[2] सा च मुक्ता परित्यक्तशोका विधेयं च यत्तद्विधातुं प्रवृत्ता ॥
शरच्चन्द्रशुभ्रं च वस्त्रं वसित्वा धवेनैव वह्निं प्रवेष्टुं किलैच्छत् ॥३१॥

मुक्ताकृतिं[3] तां सकलां विलोक्य जनन्यहल्या चकिता बभूव ॥
भ्रान्तेव वा भूतविजृंभितेव मूढेव वोन्मादनिपीडितेव ॥ ३२ ॥

पतिर्मृतश्च श्वशुरोऽथ पुत्रो दौहित्रकोऽद्यैव मुताधवश्च ॥
ततोऽद्य कन्यामरणं चितायां दृष्ट्वापि नैव म्रियतेऽप्यहल्या ॥३३॥

"आपोमयः प्राण" इति श्रुतिर्मे मिथ्यार्थमात्मानमहो ब्रवीति ॥
यस्माद्गते नेत्रजलेऽपि नैव प्राणो गतः प्रस्तरनिर्मितः किम् ॥ ३४ ॥

बलवान्[5] मम निर्घृणो हि जीवो यदि सर्वेषु मृतेष्ववशिनष्टि ॥
अथवा चतुरोऽयमद्य वाच्यः सकलं भोक्तुमना अभूद्यदेकः ॥३५

कथमपि[6] ततो धैर्यं धृत्वाब्रवीत्तनयां तदा ।
सकलजननी बाले मुक्ते मदीयकुलाङ्कुर !!
किमिति कुरुषे चान्वारूढिं झटित्यविचारतः ।
शृणु सहृदये योग्यायोग्यं मनाक् कथयामि ते ॥३६॥

स्ववंशसम्भूतसुतं[7] त्वमङ्के निधाय संसारसुखं गृहाण ॥
पत्युर्गतिं पिण्डविसर्जनेन सम्पादय त्र्यम्बकचिन्तनेन ॥ ३७ ॥

बाले निवापाञ्जलिदानकर्ता मत्सन्ततौ कोऽपि न वावशिष्टः ॥
तस्मान्मदीयं वचनं विचार्य वंशद्वयस्योद्धरणं कुरुष्व ॥ ३८ ॥

१. सम्बोधनमेतत् । २. भुजङ्गप्रयातं वृत्तम् । ३. उपजातिवृत्तम् । ४. इन्द्रवज्रावृत्तम् । ५. औपच्छन्दसिकं वृत्तम् । ६. हरिणीवृत्तम् । ७. उपजातिः

न[1] किल सद्ने मेऽद्याधारः सुते भवतीं विना ॥
किमपि वचनं वक्तुं गुप्तं हितार्थकरं परम् ॥
मनसि तदिदं कुर्याः सर्वं हितं च तथाहितम् ।
तव मम यथात्यन्तं क्षेमं वचः शरणीकुरु ॥३९॥

आकर्ण्य[2] मातृवचनं च हितार्थकारि नैवात्मभर्तृकुलजोद्धृतिकीर्तिकारि ॥
एवं विचार्य तनयाविनयावनम्रा धर्मादिकार्थजननीं जननीं बभाषे ॥४०॥

मुक्तोवाच—

अयि[3] ते मयि भाषितं तदद्य प्रतिकूलं प्रतिभासते समस्तम् ॥
स्वसतीगतिनिश्चितौ शिलायामुपदेशाख्यसुमप्रहारतः किम् ॥ ४१ ।

मम[4] सतीगमनं परमार्थदं त्वदुपदेशकृतिः परमर्थदा ॥
श्रुतिगता[5] स्वरतः[6] फलभिन्नता[7] न विदिता तव किं बत भाषिता ॥४२।

अहल्योवाच—

दुःखितायाः[8] न मे स्फूर्तिर्मूढाया न च मे मतिः ॥
वनिताया नो विवेको वृद्धाया नैव मे गतिः ॥ ४३ ॥

तूष्णीं[2] स्थितां स्वजननीं रुदतीं हताशां सङ्कल्पनं तदिव पूरयितुं च तस्याः ।
नेत्राज्जलं विसृजतीं च कवोष्णधारं दृष्ट्वा पुनः सहृदया तनया बभाषे ॥४४।

मुक्तोवाच—

जननि[4] ते हृदयं मदधिष्ठितं मम कृतिं प्रविलोक्य च दुःखितम् ॥
भवति, तत्सकलं किल वेद्म्यहं परमिदं शृणु मे वचनं मनाक् ॥४५।

न[9] मे विद्या मातः सुतरलमनःशान्तिकरणे
न मे विद्वत्सङ्गः सकलभवदुःखापहरणः ॥

१. हरिणीवृत्तम् । २. वसन्ततिलकावृत्तम् । ३. औपच्छन्दसिक वृत्तम् ४. द्रुतविलम्बितवृत्तम् । ५. वेदः कर्णश्च । ६. स्वरतः उदात्तादिः अकारादिश्च । ७. फलस्य भेदः । ८. अनुष्टुब्वृत्तम् । ९. शिखरिणीवृत्तम् ।

न मे सूक्ष्मा बुद्धिर्भवेत तव समाधानकरणे
प्रवर्तेऽहं वक्तुं परमयि सहस्व क्षणमिदम् ॥ ४६ ॥

त्वद्गृहे संवसन्त्या मे दिवसाः स्युः सुखावहाः ॥
सर्वसंसारदुःखानामपि विस्मरणं भवेत् ॥ ४७ ॥

यतः— कदाचिद्विदुषां सङ्गः किंवा पुस्तकवाचनम् ॥
कदा पुराणश्रवणं कदा वेदान्तचिन्तनम् ॥ ४८ ॥

कदा तीर्थाटनं किंवा साधूनां दर्शनं भवेत् ॥
क्वचित्कलासु व्यासङ्गः कीर्तनश्रवणं क्वचित् ॥ ४९ ॥

त्वया सह विचारः स्यात्कदाचित्परमात्मनः ॥
दानैर्महद्भिर्धर्मैः स्यादिष्टापूर्तादिमङ्गलम् ॥ ५० ॥

अधुना किं बहूक्तेन क्षणश्चैकोऽपि नाव्रजत् ॥
उत्सवेन विना दानात्साध्वीं त्वन्मङ्गतिं तथा ॥ ५१ ॥

परं त्वयि गतायां तु वृद्धायामयि मातरि ॥
न कोऽपि रक्षिता मे स्यादस्मात्संसारदावतः ॥ ५२ ॥

क्व व्रजेयं क्व तिष्ठेयं आश्रयेयं कमीश्वरम् ॥
कमहं शरणीकुर्यां मरणं को निवारयेत् ॥ ५३ ॥

प्राप्तदुःखादिहरणं तारणं वा भवाम्बुधेः ॥
स्मारणं परमेशस्य कः कुर्याद्विद नरत्नतः । ५४ ॥

पश्चात्तव सदाचारा सद्विचारा सुता भवेत् ॥
इति को निश्चयं कुर्यात्तस्माद्भर्त्रा व्रजाम्यहम् ॥ ५५ ॥

दुर्भगेयं च विधवा भर्तुः पश्चादवस्थिता ॥
इति सर्वे विनिन्देयुस्तस्माद्भर्त्रा व्रजाम्यहम् ॥ ५६ ॥

१. अनुष्टुब्वृत्तम् ।

स्नुषाः सतीत्वमापास्ते किमर्थमवशिष्यसे ॥
इति लोका वदेयुर्मां तस्माद्भर्त्रा व्रजाम्यहम् ॥ ५७ ॥

स्वपतिं दैवतं त्यक्त्वा जगत्पाषाणमाश्रिताम् ॥
धिक् कुर्युः सुधियो मूढां तस्माद्भर्त्रा व्रजाम्यहम् ॥५८॥

नाहं गर्भवती मातः किंवा बालवती सती ॥
किमर्थमिह तिष्ठेयं तस्माद्भर्त्रा व्रजाम्यहम् ॥५९॥

राष्ट्रकार्यमवश्यं तदस्ति कर्तव्यमत्र ते ॥
नैव तत्त्वत्सुतायां मे तस्माद्भर्त्रा व्रजाम्यहम् ॥६० ॥

मतिः शक्तिश्च तेऽप्यस्ति जगत्कल्याणकारिणी ॥
ते मे न स्त उभे मातस्तस्माद्भर्त्रा व्रजाम्यहम् ॥६१॥

स्वकीर्तिमैहिकीं तद्वत्सद्गतिं पारलौकिकीम् ॥
लप्स्येऽहमधुना मातस्तस्माद्भर्त्रा व्रजाम्यहम् ॥६२॥

माद्री राज्ञी स्वपतिना सहवासं समाश्रिता
तथाहं प्राप्नुयां मातस्तस्माद्भर्त्रा व्रजाम्यहम् ॥६३॥

आसत्यलोकं सकलैः सुधीभिः सत्यवादिभिः ॥
सतीभिः संस्तुताहं स्यां तस्माद्भर्त्रा व्रजाम्यहम् ॥६४॥

किमनया तव जीवितकन्यया जननि मे वद भूस्थितभारया ॥
अपि च मत्पतिना सह सङ्गमे भवसि किं न च मे सहकारिणी ॥६५॥

इत्युक्त्वा शुद्धवसना सालङ्कारा मुदान्विता ॥
अन्वारोढुं जगामासौ भर्तृपादाम्बुजेक्षणा ॥ ६६ ॥

यशवन्तशवानुगामिनीं तां निजकन्यां मुदितां सतीं च मुक्ताम् ॥
अवलोक्य तदा जनन्यहल्यानुचरैः सा विधृतागमच्छ्मशानम् ॥६७॥

१. द्रुतविलम्बितवृत्तम् । २. अनुष्टुब्वृत्तम् । ३. औपच्छन्दसिक वृत्तम् ।

स्वजनैः परिवारितां चितां तां ज्वलितां भर्तृयुतां विलोक्य कन्याम् ॥
जननी खलु मूर्छनामवाप्ता पतिताभैः पुरतो धृतापि लोकैः ॥६८॥

विराह–अबलाहृदयं वर्णयन्—

अबलाहृदयं सुकोमलं तत्कतिवेलं विपहेत वज्रपातम् ॥
पतिपुत्रसुतादिनाशरूपं वदतां वर्णयितुं यदप्यशक्यम् ॥ ६९ ॥

शतधा विहितैर्जनैरुपायैस्तदवस्थैव च सा जनन्यहल्या ॥
स्वगृहं कथमप्यथापि तातैः पतितामीदनिदुःखितान्तरा च ॥७०॥

शरीरेषु शराघातान् सहन्ते शूरपूरुषः ॥
अभीक्षणमन्तरे घातानवलेत्येतदद्भुतम् ॥ ७१ ॥

मोटयन्ती निजाङ्गानि क्रोशन्ती च क्षणं क्षणम् ॥
अपस्मारगृहीताङ्गी दृष्टाहल्या जनैस्तदा ॥ ७२ ॥

दूयमाना च मनसा हीयमाना शरीरतः ॥
धार्यमाणेव सा प्राणैस्तस्थौ मौनं समाश्रिता ॥ ७३ ॥

कतिपयैर्दिवसैरथ सावला शममितामितसङ्कटवाहिनी ॥
स्वतनयोपमराष्ट्रहिताय च स्वकृतिमाननुते स्म शनैः शनैः ॥७४॥

तिस्रः स्त्रियस्तत्र चितिं गतास्ता आमुक्तसर्वाभरणाः सहर्षाः ॥
यशः प्रकामं प्रथितं किमाभिः सम्पूर्णशुभ्रांशुकरातिशायि ॥ ७५ ॥

गुणभूमिगिरीन्दुशाकवर्षे मृतिमाप्तो यशवन्तरायनामा ॥
निजपादसरोजषट्पदीभिः स सतीभिः सह सद्गतिं जगाम ॥ ७६ ॥

इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते
श्रीमदहल्याचरिते मुक्तासतीगमनं नाम षोडशः सर्गः ।

१. अनुष्टुब्वृत्तम् । २. द्रुतविलम्बितवृत्तम् । ३. उपजातिवृत्तम् । ४ औपच्छन्दसिकं वृत्तम् । ५. १७१३ मार्गशीर्षसुदि अष्टम्यां शनिवासरे ।

# सप्तदशः सर्गः

**शिष्य उवाच –**

सद्गुरो सकलशास्त्रसमुद्र सर्वशिष्यमतिकैरवचन्द्र ॥
शिष्यशिक्षणविधानविनिद्र मङ्गलं किमपि कर्तुमतन्द्र ॥१॥

सेविता नृपसतीकुमुदिन्याः शोभनाश्चरितभागपरागाः ॥
त्वन्मुखेन्दुकिरणैर्विकचायाः शिष्यवृन्दशुचिमानसहंसैः ॥२॥

श्रीगुरो गणपते भवदुक्ता मोदकाः किमु चरित्रविभागाः ॥
सेविताः परमतोषकराः स्युः सन्ततं किमु मुखेषु निधेयाः ॥३॥

चित्रमेतदपि सेवितभागैर्न न्यवर्तत गुरो क्षुदियं मे ॥
श्रावकस्य परमिन्द्रियवर्गः संग्रहीतुमभिकाङ्क्षति नित्यम् ॥४॥

**गुरुरुवाच –**

चिन्तया च परया जरया सा पीडितापि नृपखण्डुजिभार्या ॥
सूरिसाधुनृपसंस्तुतकार्या राष्ट्रपालनमिदं कुरुते स ॥ ५॥

इन्द्रियाणि सकलानि नियम्य तत्पराण्यकृतनिर्विषयाणि ॥
साधुसङ्गतिसमुत्थविवेकैश्चित्तशुद्धिमकरोदनवद्या ॥ ६ ॥

आत्मपूतकुलजाततुकोजी राष्ट्रकार्यकरणे च समर्थः
राष्ट्रभारवहनेऽप्यधिकारी योजितोऽप्यथ तयात्मविमुक्त्यै ॥७॥

मुक्तपुत्रतनयादिकपाशा त्यक्तपुण्यकृतिलभ्यसुखाशा ॥
चन्द्रशेखरपदेषु धृताशा सा बभूव गिरिजेव जगत्याम् ॥ ८ ॥

१. स्वागतावृत्तम्। २. मुखेषु स्थापनीयाः मोदकाः चरित्रविभागाः कण्ठगताः कर्तव्याः। ३. क्षुधा इयं।

वार्द्धकं वपुषि वर्धितं शनैर्मालवेशजननी विलोक्य सा ॥
ईशचिन्तनमहर्निशं तदा तन्वती स्म सदनेऽवतिष्ठते ॥ ९ ॥

शोधकैर्बहुलपुण्यकर्मभिः शोधिते मनसि चिन्तितः शिवः ॥
तच्छिवं परमहो समागतः कर्तुमेतदवभाति मे ध्रुवम् ॥ १० ॥

देवाह—

शुद्धरङ्गपरिमाण्डितान्तरे सुन्दरे स्वकुलदेवमन्दिरे ॥
शुभ्रवस्त्रपरिधानकारिणी शुद्धसत्वगुणमानसा सती ॥ ११ ॥

पूर्णचन्द्रकिरणानिव जेतुं शुद्धरङ्गपरिरम्भितकायम् ॥
सा तदा शिवपदं प्रतिनेतुं शङ्करं किमु समर्चयति स्म ॥ १२ ॥

सर्वतः प्रतिनिवृत्तमानसा श्रीगिरीशचरणाब्जचिन्तने ॥
हंसयोषिदिव सा समुत्सुका मालवेशजननी बभूव ह ॥ १३ ॥

ईश्वरस्य विविधाभ्युपास्तिभिस्सद्गुरुप्रथमदर्शिताध्वभिः ॥
तापसीव विपिने स्वमन्दिरे सर्वदा स्वसमयं निनाय सा ॥ १४ ॥

भूयसयमुपवासतत्परा राष्ट्रभारवहनाक्षमा सती ॥
नित्यकर्मकरणे निरालसा दृश्यते किमपरा मदालसा ॥ १५ ॥

नित्यपूजनविधौ समुत्सुका नित्यदानकरणेऽतिलोलुपा ॥
सूक्ष्मबुद्धिरिव योगशालिनां मालवेशजननी परं बभौ ॥ १६ ॥

देवदर्शनमसौ कुरुते स्म तत्पुराणमखिलं शृणुते स्म ॥
दानधर्मनियमेन विना सा नानयत्कथमपि क्षणमेकम् ॥ १७ ॥

ततः कतिपयैर्दिनैरधिगतः क्रमाच्छ्रावणो ॥
नवीनतृणधान्यकाङ्कुरविवर्धकः शीतलः ॥

१. रथोद्धतावृत्तम्। २. आसीदिति शेषः। ३. स्वागतावृत्तम्। ४. [illegible]रा प्रथिता काचित्पतिव्रता स्त्री। ५. पृथ्वीवृत्तम्।

घनाघनसमीरणोद्भवनिनादमाश्रावयन्
सुदुर्गतकृषीवलौघहृदयानि चाह्लादयन् ॥ १८ ॥

कदाचिदपि गर्जितादिभिरलं प्रवर्षन् घनः
कदाचिदपि बर्हिणान् प्रतिमुखं समुल्लासयन् ॥
क्वचित्पृथुलदर्दुरप्रतिनिनादमाश्रावयन्
विभीषयति बालकाँश्च पथिकान् सरोजाननाः ॥ १९ ॥

क्वचिच्च सूरपूजनं प्रतिदिनं च वैशिष्ट्यतः
क्वचित्तदभिषेचनं क्वचिदभीष्टगौर्यर्चनम् ॥
क्वचिद्धनिकमन्दिरे नियतविप्रसम्भोजनम्
क्वचिद्भवति दीपनं सुरगृहेषु दीपावलेः ॥ २० ॥

समाहितमनास्तदा शिवपदाब्जसेवापरा
चकार किल यत्र सा निखिलनित्यनैमित्तिकम् ॥
सदुत्सवनिमित्तकं प्रयुतविप्रसम्भोजनं
स्वयं स निरवर्तयत्परमया च भक्त्या सती ॥ २१ ॥

सुदुर्धरजरापराकृततनूरशक्ता परं
ज्वरादिपरिपीडितापि च मनोऽवधाने पटुः ॥
द्विजेभ्य इतरा असूत्क्रमणमोक्षधेनूर्ददौ
मुखेन गुरुमन्त्रकं परमसौ जपन्ती बभौ ॥ २२ ॥

द्विजाः कतिपये जपं निखिलरोगनाशावहं
ग्रहादिपरपीडनापहमखं च चक्रुर्मुदा ॥
चिकित्सकवरात्परे किल परीक्ष्य रोगं तनौ
रुजापहरमौषधं प्रददुरेव तस्यै स्वयम् ॥ २३ ॥
समीपतरवर्तिनोऽखिलजनाः परं दुःखिताः ॥
निरीक्ष्य तदवास्थितिं सकललोकदुःखास्पदम् ॥

तदीयकुलदैवतं परमसङ्कटोद्धारकं
कथञ्चिदपि सस्मरुर्निभृतरुद्धकण्ठं शुचा ॥२४॥

जनाः "शिवशिवे"त्यहो गिरिशनामसङ्कीर्तनं
परेऽप्यमितघोषणं व्यदधुरुच्चकैस्तत्क्षणम् ॥
गिरीशसमधिष्ठितः स्मरहरो यदाकोशना—
दुपेत्य किल जीवयेद् भुवमिमां हि विश्वासतः ॥२५॥

यदीयपरिचर्यया कति कृतार्थतां मन्वते ॥
रुजापहरणे स्म ते कति च यत्नमातन्वते ॥
जगज्जननिजान्हवीसमविशुद्धकीर्ते त्वया ॥
ततो जगति जीव्यतामखिललोकभव्याय भोः ॥२६॥

एवं तद्गृहवासिनश्च सकलान् सेवापरान् दुःखितान् ॥
आत्मार्थं कृतसर्वपुण्यमपि तान् दातुं प्रवृत्तानहो ॥
आलोक्य प्रयता सदाशिवपदध्याने निगूढान्तरा
पश्चाच्छ्रीशिवनामवाप विगतप्राणानिला सा सती ॥२७॥

विलोक्य निखिलाः सदाशिवगतिं गतां तां जनाः ॥
सतीं च निजमातरं सकलपुण्यकर्माकरम् ॥
बभूवरतिदुःखिता "जननि भो" इति प्रारुद-
न्नधोनिहितकन्धराः प्रपतदश्रुनेत्रान्तराः ॥२८॥

अहो जननि धार्मिकैश्च सुजनैः सदा वन्दिते
सतीभिरवनीतले सततवर्ण्यवृत्ते शुभे ॥
मयूरमुखपण्डितैरपि सुगीतकीर्ते वरे
विहाय सकलानिमान् गतवती कथं त्वं वद ॥२९॥

दयाघनरसैरिमान् समभिवर्धितांस्त्वज्जना—
नुपेक्ष्य परलोकतः सुखमभूत्कथं ते प्रियम् ॥

सदाप्ययतथाः प्रजाजनसुखार्थमत्र स्वयम् ।
सुखार्थमधुना परं गतवती कथं त्वं वद ॥ ३० ॥
प्रजा जननि तेऽधुना किमुत नो निदेशे स्थिता ।
दुराचरणवृत्तयः किमुत शत्रुपक्षे स्थिताः ॥
कृतागम इमा इतीह भवती परित्यज्य ताः ।
क्रुधेव जगतीतलाद्गतवती प्रभो तद्वद ॥ ३१ ॥
विधे त्वमधुनास्मदीयजननी सुशीलाग्रगीः ।
सुपुण्यकृतिकारिणी क्षितितले जनोद्धारिणी ॥
स्वसङ्कटनिवारिणी सकलपापसंहारिणी ।
सुनिर्दयतया त्वयानवहितेन नीतास्ति किम् ॥ ३२ ॥
तदीयमरणादसौ निपतिता च दुःखार्णवे ॥
सदैव जनता त्वया ननु निमज्जिता स्वैः करैः ॥
विधे किमु दयाम्बुधे निखिलजीवमुक्त्यै क्षणा—
त्तदीयजनसंहतेः शिरसि वज्रपातः कृतः ॥ ३३ ॥
तदीयमृतितस्त्वया जगति तीव्रहानिः कृता ॥
दया च विलयं गता प्रकृतिसत्त्वता निर्गता ॥
तथा चतुरता गता, पुरुवदान्यता लीनता ॥
प्रजायवनदक्षतानलसता तथा साधुता ॥ ३४ ॥
सतीं सकलमातरं सुकरुणां च मूर्तामिमां ॥
निनीय जगतीतलात्किमपि नैव लब्धं त्वया ॥
परन्तु विविधा अमी सततदुःखभाजो विधे
शपन्ति खलु ते जना निजरवैश्च शोकच्छलात् ॥ ३५ ॥
नित्यं प्रातः प्रयतमनसा मालवानां जनन्या
द्रष्टव्या गौः परमकपिला राजगोष्ठस्थितासीत् ॥

१. मन्दाक्रान्तावृत्तम् ।



महेश्वरस्थानीयदेव्यहल्यासमाधिच्छत्रकः ।

श्रुत्वा दीनस्वरमिव सतीं द्रष्टुकामा जनानां
कृत्वारावं स्वयमपि तदा मृत्युमाप क्षणेन ॥ ३६ ॥

मृताहल्या माता सकलजनता तत्र रुदिता
मता या लोकानां शिवपदमहो या किल गता ॥
व्रतैः पूजाभिर्वा कृशतरतनुः सत्फलमिता
यशोभिः पृथ्वीयं परममितकालं धवलिता ॥ ३७ ॥

यदा सती निर्गुणतां गता सा लोकोऽप्ययं निर्गुणतामवाप ॥
आनन्दरूपा किल सा बभूव चित्रं परोऽयं बहुदुःखरूपः ॥ ३८ ॥

गतिं या वृण्वाना बुधजननुतां सन्ततमहो
सती साध्वी श्रेष्ठा पतिमनु जगत्यां स्थितवती ॥
सतां संरक्षार्थे प्रथममथ दुष्टापहतये
परेशांशेनासावभवदवतीर्णा खलु सती ॥ ३९ ॥

अहल्योत्क्रान्तिमापन्ना क्रान्तिमाप च तद्यशः ॥
अवाप हैन्दवी कीर्तिस्ततो हीनदशां क्रमात् ॥ ४० ॥

सन्ताजिनामा किल तत्समीपं तुकोजिरायस्य कनिष्ठबन्धुः ॥
चकार तस्याः परलोककृत्यं मुदृतचेता अपि भक्तिपूर्वम् ॥ ४१ ॥

सम्बन्धिनः स्युर्बहवोऽपि जीवास्तस्याः परं कोऽपि न तत्र काले ॥
यत्सज्जनस्याप्यसमे विधौ चेन्न लभ्यते कोऽपि सहाय एव ॥ ४२ ॥

पतिव्रतायाः जनमानितायाः सेवापि पूर्वैः सुकृतैर्हि लभ्या ॥
संमानितः पुत्रसमस्तुकोजी नासीत्तदा सोऽपि तदन्तकाले ॥ ४३ ॥

१. शिखरिणीवृत्तम्। २. उपजातिवृत्तम्। ३. निर्गुणत्वं मुक्तिम्। ४. गुणहीनताम्। ५. अनुष्टुब्वृत्तम्। ६. इन्द्रवज्रावृत्तम्।

अपि होळकरस्य राष्ट्रमेतन्महतीं हानिमवाप तन्मृतेर्यत् ॥
स्वकुले रविमेव सा किलाभूदपि वृत्तैः किरणैः प्रकाशिका च ॥४४॥

**गुरुरुवाच —**

शिष्य किं कथय साधुरहल्या तर्हि राष्ट्रहितसाधनवृत्तिः ॥
स्वार्थसाधुरिति सापि न वाच्या यद्ददौ सकलवस्त्वभिधेयम् ॥४५॥
कीर्तिलिप्सुरथवा न किलैषा नाश्रयं च कवये प्रददौ यत् ॥
तर्हि किं जगति नाम विमूढा नो यतः सकलराज्यविधात्री ॥ ४६ ॥
तर्हि किं चतुरसेव्यगुणा सा वक्ति सा धनगृहे स्म सुजाता ॥
तर्हि किं वदत तामतिभीरुं राघवेन्द्रवचनं कलयन्तु ॥ ४७ ॥
तर्हि तामनृतशाठ्यखनिं किं नैव सत्यशुचिवर्तनशीलाम् ॥
सर्वसम्मतसदाचरणेन प्राप्तशुभ्रकिरणप्रभकीर्तिम् ॥ ४८ ॥
मालवाख्यनिजदेशहितार्थं जीवति स्म किल सेति मृषोक्तिः ॥
धर्मरक्षणकृते निखिलानां भूतले ह्यवततार सती सा ॥ ४९ ॥
पान्थवस्तुहरणेऽवहिता ये यत्र भिल्लजगणा अपि भीताः ॥
राष्ट्रपालनविधावतिदक्षा शिक्षिता इव करानददँस्ते ॥ ५० ॥
शौर्यकर्म विदधच्छ्वशुरः सन् लब्धवानपि धनं च जनेभ्यः ॥
तद्व्ययं कृतवती च सती सादर्शयच्छ्वशुरतो निजधैर्यम् ॥५१॥
नात्यजच्च निजराष्ट्रधनं सा नैव हानिमकरोत्स्वजनानाम् ॥
धीरता चतुरता यदपेक्ष्य दृश्यतां किमु जनैरपि दक्षैः ॥ ५२ ॥

द्रव्यमस्ति विपुलं यदि कोशे तद्व्ययोऽपि सुतरां निजवश्यः ॥
का च तत्र वनिता भुवि राज्ञः सद्व्ययं स्म कुरुते निगदन्तु ॥५३॥
जातितः स्वयमहो यदि योषिन्नैव वस्त्रधनभूषणलिप्सुः ॥
सत्यधर्मरततापि च तस्या द्वेष्टृता न परधर्मजनानाम् ॥ ५४ ॥

१. औपच्छन्दसिक वृत्तम् । २. स्वागतावृत्तम् ।

सम्बभूव तरुणी वयसापि नैव यादृगितरा नु चरित्रा ॥
या परैव धनदा परमासीन्मातृभोगिनितनापसवर्गान् ॥ ५५ ॥

सर्वकर्मसु परं चतुरापि नैव यत्र च ननाश्च दलेश ॥
अद्भुतं च शिवपादरतापि या दधौ शिवकरत्वमथ स्त्री ॥ ५६ ॥

या स्वयं निजगुणैरचलापि भूतलेऽखिलगुणांश्च चलिष्ठान् ॥
कौमुदीव निखिलांश्च रथाङ्गांश्चित्रमेव पुरुषानपि जिग्ये ॥ ५७ ॥

सम्पदः पुरत एव नृपस्य राष्ट्रचिन्तनमहो शिरसीदम् ॥
नो सुखाय खलु साखिलसम्पद् भारयुक्तशिरसीव न पूजा ॥ ५८ ॥

अग्रतः किमुत यस्य सदन्न सन्नेक विनिहितः प्रखरोऽसिः ॥
नैव तत्सुखकरं मृगशत्रोरग्रतस्तृणमिवैणसुतस्य ॥ ५९ ॥

सम्पदामतितरां तरलानां स्थैर्यमानयितुमेतदहल्या ॥
तीर्थकुण्डसुरमन्दिरघट्टच्छत्रनिर्मितिमिवेह चकार ॥ ६० ॥

चञ्चलं धनमिदं स्थिरकीर्तिं भूतले वितनुयान महतं चेत ॥
साधकश्च चतुरो यदि जीवः साधयेन्न तदहो विफलं स्यात् ॥ ६१ ॥

दुष्टपीडितमहो जगदेतद्रक्षितुं क्षितितले जननीयम् ॥
तज्जनेषु सकलेषु सुतेषु शापितेव चतुरेण शिवेन ॥ ६२ ॥

वसुमतीमवनीयं शिवाय नोऽभवदियं भवरोगविनाशनी ॥
निजसदाचरणैरगदैः शुभैः किमपरा महतां भिषजां वरा ॥ ६३ ॥

द्रविणदानपरैर्विविधैर्व्रतैः सकललोकरिरक्षिपया सदा ॥
परमियं जगदन्तकरं शिवं यमवशं च वशं कुरुते स्म किम् ॥ ६४ ॥

वने पशूनां समजाय राज्ञी स्थले स्थले क्षेत्रमदाददहल्या ॥
सम्भाषमाणा ननु कम्पयन्ती पशूनुपेक्षेत कथं नु मूकान् ॥ ६५ ॥

१. चक्रवाकान । २. द्रुतविलम्बितवृत्तम । ३. उपजातिवृत्तम् । ४. समुदाय ।

भो देहि मे चेत्थमुदीरयाणानपेक्ष्य जीवाननुदीरयाणान् ॥
धान्यादिदानैरपि जीवयन्ती बभूव सा चित्रमतः किमन्यत् ॥ ६६ ॥

पक्षिणो जगति वीक्ष्य जिघत्सूनत्तुमेव विततार यवक्यम् ॥
तेभ्य एवमनुवत्सरमेषा वीक्ष्यतामतुलभूतदयेयम् ॥ ६७ ॥

यस्या राष्ट्रे वर्तमाना अशेषाश्चाण्डालाद्या हीनजात्युद्भवाश्च ॥
मासे मासेऽप्युत्सवानामहस्सु भुक्ता आसन् सद्भिरन्नैर्यथेच्छम् ॥ ६८ ॥

विप्रेभ्यस्तान् सम्यगन्नं बुभुक्षून् निःस्वान् प्राप्तान् स्त्रीसुतादीन् गृहीत्वा ॥
लोकेऽहल्या मानयामास पूर्वं यस्माच्छ्रेयान् निःस्वभव्यं विधत्ते ॥ ६९ ॥

गर्वश्रियौ सन्निहिते सदा स्तो भूपालचित्ते जगतीतलेऽस्मिन् ॥
पस्पर्श नो सम्पदि मां कदापि तस्मात्स गर्वोऽपि पलायितः किम् ॥७०

सदाश्रयः सा च सती सतीनां जायापतीनामनुपाश्रयाणाम् ॥
निःस्वापि सम्पत्तिमती बभौ वा समुन्नतापि प्रणतेति चित्रम् ॥ ७१ ॥

निजपतिसहवासं मृत्युकाले च तस्य सुखसमधिगतं तं सा च तत्याज पूर्वम्
अवनिमधिगतानां देवतीर्थप्रजानामवनमिदमवश्यं कर्तुमेवावतस्थे ॥ ७२ ॥

जगति निजसतीत्वं कीर्तिसंवर्धनार्थं यवनजनितपीडाक्रान्तसंशोधनार्थम् ॥
न किल भवतु चैकस्यात्मनः शोधनार्थमिति मनसि विदित्वा भर्तुरन्तेवतस्थे७३

प्रार्थयन्निति सदा निजदेवं म्लेच्छपार्थिवटिपुप्रमुखाश्च ॥
वत्सराणि शतमेवमहल्या जीवतु प्रथितकीर्तिहिमांशुः ॥ ७४ ॥

विश्वमेतदमुयात्मकुटुम्बं रक्षणीयमिदमेकयापिच ॥
मन्यतेस्म तत एव जगत्यां सा व्यधात्किमामिता जलशालाः ॥ ७५ ॥

विश्रुतं वितरणं बहु तस्या लज्जयेन्ननु शिबिप्रमुखाँस्तान् ॥
माधवप्रमुखसर्वनृपाणामुच्यतां किमुत येन पुरोगा ॥ ७६ ॥

१. स्वागतावृत्तम् । २. शालिनीवृत्तम् । ३. इन्द्रवंशावृत्तम् ।

केचिदेव यदि सत्यमिषेणाभ्यर्थयेयुरपि वस्तु यदीप्सत् ॥
नैव तत्प्रतिददौ यदहल्यादर्शयच्चतुरतां निजराष्ट्रे ॥७७॥

न्यायदानमपि यत्र च वर्ण्यं सज्जना अपि खला अपि तुष्टाः ॥
वर्णयन्ति विविधेषु जनेषु नेदृशी जगति कापि किल स्त्री ॥७८॥

चन्द्रवन्तमपि झाबववालं सा कदाचिदपि भीषयति स्म ॥
जानती सकलमेवमनस्तां वर्णयामि चतुरामपि शूराम् ॥७९॥

स्वार्थकामुकजनैर्यथडिता संस्तुतापि परमार्थकामुकैः ॥
इष्टपूर्तकरणेन सर्वदा सा बभौ किमुभयार्थसाधिका ॥८०॥

त्रिंशदब्दसमयं महीतले सूर्यकान्तिरिव भासते स्म सा ॥
सर्वपापतिमिरं निजैः करैरम्बरे जगति निःससार किम् ॥८१॥

पूर्वं शिवाजीनृपतिः किलैकः शूरेषु साध्वीषु तथा ह्यहल्या ॥
चंडांशुरेको जगतीतले वा ज्योत्स्ना जनानन्दकरी तथैका ॥ ८२ ॥

शूरेण पन्तेन च माधवेन सम्पालितो यो निजराष्ट्रवृक्षः ॥
धर्मेण वा जीवनसेचनेन प्रोत्फुल्लतां नीत इवानया सः ॥ ८३ ॥

शहाजीसुताद्यैर्नृपैर्मन्त्रिवर्यैर्महाराष्ट्रधर्मः स्थितिं प्रापितोऽपि ॥
ततो वाजिनानादयस्तं प्रसभं विधातुं क्षमा नैव ते सम्बभूवुः ॥ ८४ ॥

अशक्यं च तद्धर्मसंरक्षणं सा करोति स्म साध्वी महद्भिः प्रयत्नैः ॥
अतः सर्वलोकैः सदानन्दचित्तैर्हृदि स्मर्यते सर्वदा श्रद्धया च ॥ ८५ ॥

अहल्यां परां सत्वमूर्तिं विलोक्य परित्यज्य वैरं स्म तां पूजयन्ति ॥
महाराष्ट्रधर्मप्रसारस्य कर्त्रीं जगत्यां विना तां न कः सम्बभूव ॥ ८६ ॥

श्रीशालिवाहनशकेऽद्रिकुपर्वतैकसङ्ख्यामिते नभसि वद्यचतुर्दशेऽह्नि
धर्मावनी सकलहिंदुजनस्य माता शम्भोः पदं च शिवदं गतवत्यहल्या ॥८७॥

१. स्वागतावृत्तम् । २. रथोद्धतावृत्तम् । ३. इन्द्रवज्रावृत्तम् । ४. वसन्ततिलका-वृत्तम् । ५. शके १७१७ । ६. श्रावणमासे ।

धर्ममूर्तेर्मृतेर्वार्तां न कः श्रावयितुं भुवि ॥
प्रभुस्ततः स कालः किं श्रावणत्वमगात्स्वयम् ॥ ८८ ॥

चतुर्दशसु लोकेषु वार्तां श्रुत्वातिदुःखदाम् ॥
चतुर्दशीमिषेणैव जनता सकलागता ॥ ८९ ॥

ब्राह्मो मुहूर्तो लोकेऽस्मिन् ब्रह्मतां प्रापितुं क्षमः ॥
इति प्रभातकाले साहल्याऽदृश्यपथं गता ॥ ९० ॥

वनितया नतया जगतीतलं सुगमितं रमितं निजकर्मणि ॥
गुरुवचोऽतिगमेव च तद्यशो मम मतिः कथयेत्सकलं कथम् ॥ ९१ ॥

श्रीमन्मालवदेशराजवनिताहल्या च सत्यप्रगा ।
लोके राजभिरप्यहो त्रिपवणं वन्द्या बभूवावनौ ॥
एतत्तच्चरितं यथामति कृतं सर्वैर्जनैरादृतो ।
वाच्यं तेन भवेत्किलाद्य सफलाप्येषा मदीया कृतिः ॥ ९२ ॥

वरहिता वसुधा सकला यतो वरहिता वसुधेव सदाभवत् ॥
सुरहिता वसुधा किल तन्मृतेरपि वधार्थमिता कुजनस्य किम् ॥ ९३ ॥

अतिचित्रं तच्चरित्रं पवित्रं येन वाचितम् ॥
अरित्रं तद्भवेत्तस्य नात्र स्तोकोऽपि संशयः ॥ ९४ ॥

इति श्रीमद्भागवतोपाभिधबापुशास्त्रिसूनुना सखारामशास्त्रिणा विरचिते श्रीमदहल्याचरिते उपसंहारो वा अवतारसमाप्तिर्वा नाम सप्तदशः सर्गः

**इति श्रीमदहल्याचरितं समाप्तम् ।**

१. अनुष्टुब्वृत्तम् । २. द्रुतविलम्बितवृत्तम् । ३ शार्दूलविक्रीडितं वृत्तम् । ४. वकारेण रहिता वसुधा नामसुधा—अमृतं—तत्तुल्या , ५. सुइत्येतदक्षरेण रहिता वसुधानाम वधा—वधकारिणी या वसुधा—पृथ्वी पूर्वमहल्यासमये सुधा तुल्या वरा श्रेष्ठा हितकारिणी चासीत् सैव वसुधेदानीं तस्या अहल्यादेव्य अभावे कुजनयोगेन वधकारिणी—विनाशिका चाभवत् ।

# ॥ कविकुलप्रशस्तिः ॥



श्रीजामदग्निगोत्रान्वयसंप्रसूतो विद्वद्वरो भागवतोपनामा ॥
शिष्यान्क्रमध्यापयितुं पृथिव्यां वेदार्थवेत्ता धिषणोऽवतीर्णः ॥१॥

अप्पाभिधः शान्तमनाः सुशीलो मुनिव्रतो नित्यजटाप्रपाठी ॥
आसीत्सदा भूधरदुर्गवासी ग्रंथान् लिखन् स्वे सदनेऽप्रवासी ॥२॥

तस्यात्मजो धीरवरो गणेशः साहित्यशास्त्रे कुशलोऽग्रगण्यः ॥
कैलासनैपुण्यमिवावहंश्च प्रीत्येनगान् शिक्षयति स्म शिष्यान् ॥३॥

तस्यात्मजोऽध्यापितशास्त्रमर्मा विद्वान् प्रसिद्धः किल बापुशर्मा ॥
मुखस्थितानीव सदैव यस्य स्वधर्मशास्त्रस्य वचांस्यभूवन् ॥४॥

तस्य सूनुरहं बालः सखारामो यथामति ॥
अहल्याचरितं काव्यं व्यरीरचमपण्डितः ॥ ५ ॥

न शब्दशास्त्रे निष्णातः काणादन्याययोरपि ॥
परं परेशकृपया काव्यपारमवाप्तवान् ॥ ६ ॥

*पद्मापिनाकिपादाम्बुरुहद्वन्द्वैकमानसः ॥
भक्त्यार्पयत्कृतिं ताभ्यां तुष्यतां वरदौ सदा ॥ ७ ॥

* पद्मा=करवीरनिवासिनी लक्ष्मीः ।
पिनाकी=केदारलिंगम ( डोंगरचा जोतिबा. )

# शुद्धिपत्रम् ।



| पृष्ठम् | श्लोकः | पंक्तिः | टिप्पणी | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|
| ३ | २० | २ | | माणकोजी नामको | माणकोजीनामको |
| ४ | २९ | १ | | रन्दिनी | नन्दिनी |
| ,, | | | १ | कार्ण्यं सा | कार्ण्यं वहन्ती सा |
| ,, | ३५ | २ | | नाम संस्कार | नामसंस्कार |
| ८ | ७३ | २ | | सता | स ता |
| ११ | २२ | १ | | पञ्चाष्ठयुत्तरे | षट्पञ्चाशत्तमे |
| ,, | ,, | २ | | षोडशे शतके | षोडशोत्तरशते |
| १९ | ३६ | २ | | चाथसुवासिनीभिः | चाथ सुवासिनीभिः |
| ,, | ३७ | २ | | श्वश्र्वा | श्वश्र्वा |
| २० | ४० | २ | | प्रशोभ्यमाणा | प्रसोभ्यमाणा |
| ,, | | | १ | १६७६ | १६६७ |
| ,, | ४८ | २ | | प्रकाशयामास | प्रकाँशयामास |
| २१ | ५२ | १ | | ऽसहायं | ऽसहायो |
| २५ | ७ | २ | | सदादुराचार | सदा दुराचार |
| ,, | | | ३ | स्वयमपीत्यर्थः | स्वयमपि शुश्रावेत्यर्थः |
| २६ | १० | २ | | मद | मदा |
| २७ | | | २ | स्त्रा | स्त्री |
| ,, | | | २ | नित्य मेव | नित्यमेव |
| ३४ | २१ | २ | | मधुरा क्रन्दन | मधुराक्रन्दन |
| ,, | २५ | २ | | पतिता | पातिता |
| ,, | २६ | २ | | किमीश्वरः | किमीश्वर |
| ३५ | ३४ | १ | | स्वधनस्य | स्वजनस्य |
| ४५ | ७३ | १ | | मु मृत्युं | सुतमृत्युं |
| ,, | ,, | ४ | | सम दाय | समादाय |
| ५२ | ६६ | २ | | मथोऽसुराधिपो | मथासुराधिपो |